अच्युतग्रन्थमालाया-
द्वितीयपुष्पम् ।

# श्रीभगवद्भक्तिरसायनम्

परमहंसपरिव्राजकाचार्य्य-विश्वविख्यातवैदुषीक—
श्रीमधुसूदनसरस्वतीयतिवर-
विरचितम् ।

[प्रथमोल्लासे मूलकृद्रचितया टीकया
शेषद्वयोल्लासे

श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौम-
साहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न—
गोस्वामिदामोदरशास्त्रिणा रचितया
प्रेमप्रपया सहितम्
प्रेममपाकृतैव संशोध्य संपादितम् ।

गोयनकाश्रीगौरीशंकरश्रेष्ठिना
। काश्यां—
माधवविष्णुपराड़करद्वारा ज्ञानमण्डल-मुद्रणालये संमुद्रय्य;
प्रकाशितम् ।

१९८४ वैक्रमाब्दे ।

प्रथमसंस्करणम् ]

श्रीः

# संपादकस्य वक्तव्यम्—

श्रीमदनुपमनीममध्वान्तमौलिरामकृष्णद्वैपायनव्यासात्मकसच्चिदानन्दविग्रह—
पूर्णतमाह्लादिनीशक्त्यभिन्नीकृतस्वरूपप्रेमावतारभगवत्श्रीश्रीगौरकृष्णः शरणम्

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया ।
शश्वद्भक्तिविनोदया समदया माधुर्यमर्यादया
श्रीचैतन्य दयानिधे ! तव दया भूयादमन्दोदया ॥

इह किलानादिसंसारस्रोतसोह्यमानप्राणिसार्थप्रवृत्तिनिवहेषु चेष्टात्वानुमित-किञ्चिदुद्देश्यकस्वयत्नकफलस्वरूपजिज्ञासाप्रसक्तौ मुख्यामुख्यसाधारण्येन तदनन्तत्वेऽपि धर्मार्थकाममोक्षविधाभिन्नचतुष्टयं संगिरन्ते तन्त्रज्ञा इति हि पुमर्थवादिनां दन्ध्वन्यमानः पटहः ।

अत्रेदमालोच्यते—अदृष्टोपायत्वेन धर्मस्य, दृष्टोपायत्वेनार्थस्य, जन्यसुखफलत्वेन कामस्य, नित्यसुखफलत्वेन मोक्षस्य, समर्पकत्वेन तत्तत्प्रमापकवचनानां चारितार्थ्येऽपि, भूम्ना शास्त्रेषूपलभ्यमानानां मुक्तेरप्यनभिलषणीयतामवगमयतां—

"त्वत्कथाऽमृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्" ॥

तथा

"त्वत्साक्षात्करणाह्लादविशुद्धाब्धिस्थितस्य मे ।
सुखानि गोष्पदायन्ते ब्राह्माण्यपि जगद्गुरो !" ॥

तथा

"न साधयति मां योगो न सांख्यं धर्म उद्धव ! ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता" ॥

इत्यादीनां संप्रतिपन्नप्रामाण्यभाजां वचनानामुक्तपुमर्थेष्वन्यतमस्यापरिगृह-यालूनां साधकाशताया दुर्घटत्वादलमा वैयर्थ्यं मा प्रसाङ्क्षीदिति सूरिभिः का चिन्त्यदर्शनीयेव,

न च पुमर्थेषु प्रथमचरमयोरपायत्वात्तृतीयस्य नाशित्वेनानर्हत्वेऽपि तुरीयपरतैवोक्तवाक्यानां वक्तव्येति सांप्रतम् ? प्राक्चतुर्वर्गादिपदोपादानात्तस्याप्यनङ्गीकृतिस्फोरणात्,

न च मोक्षपदव्यपदेश्यानां नानात्वेन सायुज्यस्यैव तच्चतुष्टयघटकता; तदन्येषामुक्तवाक्यीयतात्पर्यविषयतेति वाच्यम् ? विशेषग्राहकाभावादुक्तप्राचोयुक्तेरप्रामाणिकत्वात्,

तस्मादुक्तजातीयवचनानां भगवत्प्रेमस्वरूपफलपरत्वमेव न्याय्यं, यच्च क्वचन साधनभक्तिपराणां वचसामपि पुमर्थचतुष्टयानाग्रहित्वं तदपि साध्याभिप्रायकतया सुयोजम् , एवं च तादृशप्रेम्णः पञ्चमपुरुषार्थतोक्तिः सुसमञ्जसैव श्रुतिस्मृत्यादिशास्त्रेषु,

न च भगवत्प्रेम्णि मुक्तेर्नान्तरीयतया तच्चतुष्टयैवोपपत्तौ पुमर्थेषु पञ्चमसिद्धान्तोऽनतिप्रयोजनक इति शङ्क्यम् ?

भगवत्प्रेमाणमुद्दिश्य साधने प्रवृत्तस्य पुंसस्तत्प्रेमत्वस्यैवोद्देश्यताऽवच्छेदकत्वं युक्तं न त्वानुषङ्गिकमुक्तित्वस्य; प्रधानेन व्यपदेशा भवन्तीति न्यायाद् ,

एवं सिद्धे भगवत्प्रेम्णः पञ्चमपुरुषार्थत्वे तदधिगमोपायकुक्षिप्रविष्टाः कायिकवाचिकमानसिकव्यापाराः सर्वेऽपि साधनभक्तिव्यवहार्याः, तथा च भक्तिशब्दो भजनं भक्तिरिति व्युत्पत्त्या प्रेमवाचको भजत्यनयेति व्युत्पत्त्या श्रवणादिसाधनवाचकश्चेति न किमप्यसौष्टवम् ,

एवं च पुरुषेणार्थ्यमाने धर्मार्थकाममोक्षप्रेमपञ्चके प्रथमद्वयं स्वरूपतः फलत-स्तार्तीयीकं स्वरूपतः प्राकृतमत एव नश्वरतया विवेकिभिर्हेयपक्षे निक्षिप्तं, यद्वा धर्ममात्रस्य नेयं दशा; प्रत्यवायप्रयोजकीभूताभावप्रतियोगिकर्मजन्यधर्मस्य स्वाश्रयशोधनविधया तुरीयपञ्चमपुमर्थाधिगमप्रयोजकतयाऽत्यन्तमुपादेयत्वात्; तथाऽपि तदितरस्मिन्तयाऽऽस्मतायामविवादात्, शिष्टौ द्वौ तु स्वरूपतोऽप्राकृतावपि प्राकृते ष्वेव साधनेष्वायतेते ।

तानि च साधनानि कर्माष्टाङ्गज्ञानभक्तियोगाश्चत्वारः—

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्र चित्" ॥ इति

श्रीमुखोक्तेः; यद्यपि शङ्कमादिकयाऽष्टाङ्गयोगोऽत्र नोक्तः; तथाऽपि ज्ञानान्त

र्गतत्वेनोक्तप्राय एवेति के चिद्, वस्तुतस्तु व्यञ्जनलवणन्यायेनानुक्तोऽपि स नान्तरीयकतयाऽवगम्यत एव,

तत्रादौ नित्यकर्मानुष्ठानाद् विशुद्धेऽन्तःकरणे; वैराग्योपोद्वलिते चेतस्यद्रुतचित्तानां तत्त्वज्ञानोदयान्मुक्त्यधिगमः, यद्वा–श्रवणादिसाधनसाहायकाद् द्रुते चेतसि रुच्यादिक्रमेण भगवति प्रेमोदयः, इत्थमधिकारिभेदेन व्यवस्था निर्धारिता शास्त्रैः,

एवं चाद्रुतचित्तानां वर्त्मान्यन्यत्र प्रदर्श्य; द्रुतचित्तानामेतत्प्रदिदर्शयिषुर्विपश्चिदग्रेसरः श्रीमधुसूदनसरस्वतीयतिर्भगवद्भक्तिरसायनं ग्रन्थं निबध्नन् संदर्भसौकर्य्यायात्र चिकीर्षितोल्लासत्रये; प्रथमे तावदुल्लासे स्वरूपभूमिकासाधनसहितं भक्तिसामान्यं प्रदर्श्य, द्वितीयेऽस्मिन् भक्तिविशेषान्निरूप्य; तृतीये तस्मिन् सपरिकरं सोपपत्तिकं भक्तिरसं व्यवातिष्ठिपत् ।

अस्मिन्निबन्धे प्रधानतयोपपाद्यस्य भक्तिरसस्य संक्षेपतस्तत्त्वमवजिगमिषूणामुत्कण्ठाविनोदायैतत्संबद्धावश्यज्ञेयसकलनस्य प्रतुष्टूषया किंचिदुपक्रम्यते—

इह तावद्रससंबद्धाः प्रश्नाः सक्षेपतश्चत्वारः समापतन्ति—रसः किंप्रमाणकः? किंप्रयोजनः? किंस्वरूपः? कथं चोपलब्धव्यः? इति,

तत्र—

"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणाद्"—

इत्यभियुक्तोक्तदिशा रसो येन प्रमितिसितव्यस्तदीये हि स्वरूपे यथार्थज्ञानसाधनत्वात्मके फलतः सर्वसिद्धान्तरीत्या पर्यवसिते तत्संख्यायां तैर्थिकानां सगोत्रकलहस्यानपेक्षणीयत्वेनोत्थापनानर्हत्वात् प्रकृताचार्य्यानुमोदितानामेव प्रमाणानामुपगन्तव्यतायां रसप्रस्थानिभिराचार्य्यैः प्रत्यक्षानुमानागमा एव प्रमाणत्वेनोपेयन्त इति वक्तुं युज्यते,

यद्यपि प्रमेयविशेषनिरूपणप्रवणतावशंवदेन शास्त्रकारेण "परमतमप्रतिषिद्धमनुमतं भवती"ति नयमनुरुध्य; प्रकृतविषयकसर्वोक्तिव्रातस्यानुमन्तव्यताप्रसक्तावपि रसनादाभिन्नतानिबन्धनसमानतन्त्रसिद्धान्तादरेण संगीतशास्त्रेऽदितत्वप्रयुक्त, रसप्रत्यायनपूर्वहतयाऽस्त्राद्रुतप्रञ्जनायां यदुपज्ञताऽस्ति तेषां वैयाकरणानां राद्धान्ते महाभाष्यकारादिभिर्व्यवद्धतत्त्वायत्तं; परमोदेयतया पारमार्थिकस्वरूपमदर्शनपरायणानां महर्षिशाण्डिल्यादीनां सूत्राक्षरतो वा एवं त्रैविध्यमुक्तनिष्टमेवेति प्रकृते निर्दिष्टा प्रमाणत्रय्येवेहानुसृयत इति पक्षः शक्यस्वीकरणः,

परेषामत्रैवान्तर्भावादेतन्निरूपणेनैव रस प्रमातव्य, यद्यपि रसस्य प्रकाशाभिन्न तया नापरेण प्रकाश्यताऽपेक्षा, तथाऽपि कथमपेक्षेत्यादिकमुपरिष्टान्निपुणतरमुपपादनीयम्, तत्र प्रत्यक्ष तावन्नाव्यदर्शिना सहृदयानामानुभविकमेवेति नेह किमपि विवक्षणीयम्, अनुमानमपि पक्षीकृतात्मनि "आत्मनस्तु कामाये"त्यादिभि श्रुतिभगवतीभि प्रमोपितेन निरतिशयप्रेमास्पदत्वेन हेतुना स्वात्मानन्दात्मकत्व साधकतया स्वभ्युपगममेव, निरतिशयानन्दस्य रसात्मकतयाऽऽत्मनश्च रसाभिन्नतया तदभिन्नाभिन्नस्य तदात्मकतया औत्सर्गिकत्वादिकमपिस्वरूपविवेचने प्रतिपिपादयिष्यमाणम्, आगमस्तु "रसो वै स" इत्यादिरपिक्लिपक्रमोपसहारादिभिर्निर्णीततत्परताको नैव तिरोहित इति प्रमाणसिद्धेरसतत्त्वे न का चिद् विमति, ततश्च निरतिशयानन्दसाक्षात्कार एव प्रयोजनत्वेनावधार्यतेऽत्रेत्यास्माकीन समय ।

प्रयोजने चेदमीये निश्चिकीर्षितव्येऽयमेव प्रयोजनात्मेति सिद्धान्त —तथा हि प्रयोजनं हि फल, तच्च मुख्यगौणरूपतया द्विविध फलान्तरेच्छाऽधीनेच्छाविषयत्वं गौण च, तदनधीनेच्छाऽऽस्पदत्व तु मुख्यत्वं, तत्त्व च सुख एव विश्राम्यतीत्यत्र नैव विवादो विश्वजनीनानुभवसिद्धत्वाद्,

यद्यपि लोके सुखत्वेन व्यवह्रियमाण न वस्तुत सुख, विनाशित्वेन दु खाधायकत्वाद्, यदाहुर्महर्षिपतञ्जलिपादा —"परिणामतापसंस्कारदु खैर्गुणवृत्तिविरोधाच्च सर्वमेव दु ख विवेकिन" अत एव दु खमिश्रित त्वेन सुखस्यापि मधुसपृक्तगरलवद्धेयत्वात्तदपि दिध्वसयिषितव्यमेवेति महर्षिगौतमपादा व्यवातिष्ठिपन्, तथाऽपि वास्तविकसुखमलभमाना ससारिणस्तदाभासेनैव कृतकृत्यंमन्यमाना समवलोक्यन्ते,

वस्तुत सुख च "आनन्द ब्रह्मणो विद्वान्" "तस्यैवानन्दस्यान्येमात्रामुपजीवन्ती"त्यादिभिर्भगवतीभि श्रुतिभिरेवावगमित, तच्चात्मस्वरूपघटकतया परिणामादिदु खकालुष्यासंपृक्तमित्यात्मस्वरूपावगत्या स्वरूपमपौषयिदप्रस्थानाध्वनीनै, अतएवेद विविच्यमान रसतत्त्व साहित्यदर्शनपरमजीवातुरूपात्मस्वरूपोपजीव्यतयाऽऽश्रित्य चतुर्मुखादिमतमुन्यन्ताचार्याणामपि प्रमाणोपबृंहित रसशास्त्रत्वेन व्यपदेश्यं न दर्शनान्तरैरनाथमाशङ्कितव्यम्,

दर्शनान्तरेषु किल लोकायतिकसौगतानामात्मनः शाश्वतिकतैव दुर्लभेति निर्दिष्टदूषणं जागरूकमेव,

विवसनसमये कथमपि नित्यत्वेऽपि तस्यानन्दता शशविषाणायमानैव,

नैयायिकवैशेषिकाणां मते तन्नित्यत्वेऽपि निरानन्दतैवैतस्य स्वरूपं, सानन्दता तु दुःखवत्ताऽऽवृतैवेति न सिषाधयिषितसिद्धिः,

कापिलपातञ्जलानामपि तथात्वेन तथात्वमेवेति नाभीष्टपूर्तिः,

अध्वरमीमांसाविदां नयेषु प्रायेणोक्तचर्य्यैवाशान्तिः क्व चिन्मुक्तौ नित्यसुखाभिव्यक्त्यभ्युपगमेऽपि दुर्निवाराऽर्थान्तरता; मुक्तितः पूर्वं तदीयव्यक्तेरसत्कल्पत्वात्,

अनयैव दिशाऽऽत्मनोऽनानन्दतादिनामवशिष्टदर्शनानां सिद्धान्तेभ्योऽप्यगतार्थता विवेक्तव्या,

औपनिषदसिद्धान्तिनां त्वद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैतद्वैतवादिनां एषामपि प्रस्थानेषु चात्मतत्त्वस्य नित्यतयाऽऽनन्दतया च महतः संवादस्य सत्त्वेऽपि न तथाऽऽनुकूल्यं यादृशप्रयोजनसंपिपादयिषयाऽऽचार्य्या रसशास्त्रमुपनिबिभन्त्सव एतदाविरबीभवन्, एतच्चानुपदमेव स्वरूपनिर्णये वक्ष्यते ।

रसस्वरूपजिज्ञासायां तावदात्मैव रस इति रसदर्शनिनां राद्धान्तः—"रसो वै सः" "आनन्दं ब्रह्मणो विद्वान्" "आनन्दाद्ध्येवेमानी" ति श्रौतवचनानि स्वरूपतटस्थलक्षणाभ्यामात्मानमेव लक्षयन्ति, आत्मा चात्र यद्यपि ब्रह्मपरमात्मादिपर्यायो भगवानेवोपक्रमोपसंहारादिभिस्तात्पर्यास्पदतयाऽवजिगमिषितस्तथाऽपि प्रतिबिम्बतया परिच्छिन्नतया वस्तुतया वा "यथाऽग्नेर्विस्फुलिङ्गाः" "ममैवांशो जीवलोके" "अंशो नानाव्यपदेशाद्" इत्यादिश्रुतिस्मृतिब्रह्मसूत्रादिभिर्व्यवस्थापितो जीवोऽपि तत्त्वदृशा सच्चिदानन्दात्मा; परन्तु सिन्धोर्बिन्दुरिव तत्स्वभावः कणकस्तः सुतरां तदुपात्तमरणितः सर्वांश एव न तादृशो, नातो जगत्कर्तृत्वाद्यापत्तिर्यैनं तत्रोपदर्शयन्ति "जगद्व्यापारवर्ज्जमि" त्यादिप्रमाणान्युपोद्बलयन्ति, अत एवायं तदीयतटस्थतात्मत्वतया शास्त्रेषु व्यवह्रियते, \

सच्चिदानन्दस्वरूपस्य भगवतः किल तिस्रः शक्तयः शास्त्रप्रमिताः स्वरूपातटस्थाबहिरङ्गाख्यास्तासां स्वरूपाख्यायां पुनस्तिस्रो भिदाः संधिनीसंविद्ह्लादिनीनामिकाः, तथा च तत्त्वतो भगवत्स्वरूपसजातीयः सर्वथा तद्भिन्नामीपबहिरङ्गातोविलक्षणः सन् जीवः तटस्थ इति गीयते, एवं चोक्तस्वरूपो जीवोऽपि रसपद-

वाच्यतां नार्हतीति न, न खलु रससमुद्रस्य बिन्दुः रसान्यो भवितुमर्हति, एतदेवाभिप्रेत्य रसशास्त्राचार्याः प्राकृताप्राकृतभेदतो द्वैविध्यं रसस्य संगिरमाणास्तथैवोपापीपदन्, मूलं चैतदीयमाग्नेयपुराणादिषु व्यक्तमेव, आचार्यभरतमुनिना तु यानुपचिकीर्षुणा प्रबन्धि नाट्यशास्त्रं, ते किलानादिकालतो बम्भ्रम्यमाणप्रपञ्चचक्रचङ्क्रमणताचणाः अपरिशीलितचरपरमपुमर्थप्रापकपद्धतयः सुकुमारमतयो द्विविधवासनाग्रासितहृदयाः काव्यार्थचिन्तनाल्ङ्कर्मीणयोग्यतापरिपचेलिमचातुरीका विनेयाः; तानेतान्

"असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते—

इत्यादिस्वरूपेण गुडजिह्विकान्यायेन चरमगन्तव्यदिक्संमुखीनीकर्तुकामेन परमरसास्वादमाधुरीसंपर्लेशोऽपि यदवधि नानुभवगोचरीकार्येत तदवधि कथमिवादसीयमर्मे स्पृहयालवोऽमी क्रियेरन्निति विचिन्त्य दुष्करप्रवृत्त्यास्पदानि निःश्रेयसप्रापणपटूनि श्रवणादीनि साधनान्यव्यापार्यापि निखिलानर्थनिदानाज्ञानमुन्मूल्यापि चिरसंचितचरकर्मकलापानपरिप्लुष्यापि जनैर्यथा तादृशं वस्त्वास्वादपदवीं नीयेत यादृशं तत् तान्यव्यापार्य्य, तदुन्मूल्य; तान् परिप्लुष्य सूरिभिस्तथा क्रियते, स प्रकारो दिव्यज्ञानमन्दरेण निगमपयोधीन्प्रमथ्य नाट्याम्नायपीयूषवपुराविरकारि, सुतरां प्रथमभूमिकारूढानामधिकारिणामुपकारः प्राकृतरसपरिचयेन यथा सुकरो, न तथाऽप्राकृतरसज्ञापनेनेत्यधिकारानुरूपमुपदेष्टारः श्रद्धेयवचनाः फलेग्रहियत्नाश्च भवन्ति नापरथा, अतो मुनिनाऽस्यैव प्रबन्धो निर्बन्धेनाबन्धि नापरस्य, नैतावता स नास्त्येव नानुमत एव वेत्यवगन्तव्यं, कथमन्यथाऽऽस्मदर्शनासाधनतायामस्य शास्त्रस्य दर्शनता, कथं चोपक्रम एव चतुर्वर्गाप्तिप्रयोजकत्वोक्तिरस्य संगच्छेत कथं च रसताऽपि जीवस्वरूपघटकानन्दस्य? रसत्वप्रतिपादिका हि भगवती श्रुतिः उपक्रमोपसंहारादिपरिचारकवृन्दसेविता खलु स्वेष्टमाप्नोति,

न च तत्सध्रीचीनश्रुतितात्पर्यविषयाभिन्नत्वाज्जीवस्य नोक्तापत्तिरिति वाच्यम्? तयोरभेदस्य याथातथ्यचिन्तायामुदस्यापि सम्प्रतिपन्नभेदकालेऽभेदोक्तेरनुपयुक्तत्वात्, प्रदर्शितविधया शास्त्रप्रवृत्त्युपजीव्यविरोधाच्च, एतेन ज्ञानकाण्डेन रसकाण्डस्य गतार्थतया काण्डान्तरारम्भचर्चा मुधेति वदन्तो निरस्ताः, प्रयोजनपार्थक्यं हि प्रस्थानपार्थक्यं प्रयोजयति, तच्चैहिकमामुष्मिकं वा, उत्कृष्टमपकृष्टं वांऽशतद्व्यत्ययदे-

तद, इत्थ चैष रप. प्राकृतालम्बनकतया प्राकृत इति व्यवह्रियते, अप्राकृतालम्बनकोऽप्राकृत इति शास्त्रविदां मर्यादा व्यवहारासकरार्थमादरणीयैव, द्वैविध्य चैतदाचार्यभरतेनापि बहुशो ध्वनितमप्यनधिकार्यत्वेन नाभिहित, तदेव पुनराग्नेयादौ स्पष्टमुक्तं नेयता काऽपि क्षति ।

यत्तु प्राकृताप्राकृतौ रसौ क्रमेण लौकिकालौकिकाविरयुच्येते इति तन्न समीचीनम्, उभयोरप्यलौकिकत्वाद्, न हि जातु लौकिको रसोऽध्यात्मविधाना प्रधानत्वेन प्रतिपाद्यो भवितुमर्हति, स हि तृतीयपुमर्थगृह्योऽन्यथा प्रस्थानभेदानुपपत्त्या बाभ्रव्यादिसहितानामानर्थक्यमापतेदित्यादिर्भूयानुपपत्त्व स्याद्, अलौकिक च चैनयोर्लौकिकमर्यादाऽतिशायित्वाद्, दर्शयिष्यते चानुपदमेतद, प्राकृतत्वं च पादविभूतिविलासविजृम्भितत्व, त्रिपाद्वैभव चाप्राकृतमिति वस्तुस्थिति, अत्र प्राकृतो रस उच्यते, अप्राकृतस्तु भाव इति नाट्यशास्त्रीया परिभाषा,

वस्तुतस्त्वप्राकृतो भक्तिरस उच्यते—रसत्वव्यपदेशजीवातोस्ताद्रशानन्दात्मकताया उभयत्र सत्त्वादिति ।

रसोपलब्धिप्रकारस्त्वेष –वक्ष्यमाणस्वरूपकैर्विभावानुभावसात्विकसचारिभिर्व्यक्तो व्यक्तिविषयीकृत स्थाय्येव रसता भजतेऽयमर्थस्तु यावद्रसदर्शनिभिरनुमोदितोऽपि स्थायिस्वरूपे तदभ्यक्तौ च प्रक्रियाभेदो मतभेदनिबन्धनोऽस्त्येव–तत्र–अाहकारिके चित्ते कारणविशेषोदबुद्धसरजस्केतरगुणावभिभूय प्रकाशमाने जातु चिदनुभूतर या दिस्थायिसस्कारोऽप्युदबुद्धीभूय प्रतीयमान उपचीयमान पुष्यमाणोऽभिन्नायमानने *दिष्टचिच्छस्त्याऽऽस्मीयत्वेन भुज्यमानो रसव्यपदेशभागिति कापिली प्रक्रिया,* परन्त्वसौ जडत्वपरप्रकाश्यत्वप्राकृतत्वादिभिरपाद्रियमेव वस्तु नास्माकीनो रस, भौतिके चित्ते हेतुविशेषोद्दुदितप्रदिमनि मुद्रितो रत्यादिस्थाय्याकार सस्कार स्वोद्बोधक महिमतिरस्कृतावृतिकचिद्विशिष्टो रस इत्यौपनिषदेकदेशिना सरणि, अत्र पूर्वोक्तदोषासत्त्वेऽपि चितोऽङ्गत्वोक्त्या श्रुतिस्वारस्यभङ्गोऽस्त्येव, एतद्दोष परिहर्त्तुकामै कैश्चित् स्थायवच्छिन्नभग्नावरणचिदेव रस उक्त, किन्त्वेवमपि गौणत्वमानप्रयुक्तस्वारस्ये समाहितेऽप्यव्यवहितोत्तरवाक्यसहितवाक्यैकवाक्यतास्वारस्यभङ्गस्तदवस्थ एव, तद वाक्य च—"रसं ह्येवाय लब्ध्वाऽऽनन्दीभवती"ति, एतद्वाक्यघटकायपदार्थकर्तृकर्मभस्मैव भवता रसत्वेन विवक्ष्यतेऽत स्पष्ट एव स्वारस्यभङ्गो भग्नावरणचैतन्यस्यैवायपदार्थतया कर्तृकर्मणोरभेदापत्ते ।

न च सावरणस्यैवायंत्वेनकर्त्तृतयाऽनावरणस्य कर्मतयोपाधिकभेदेनाविरोधान्न स्वारस्यभङ्ग इति वाच्यम् ? स्वप्रकाशवादे किलावरणभङ्गमन्तरेणैतस्यानपेक्षणादावरणभङ्गादेरानन्दीभवनप्राप्तेः पूर्वांशवैयर्थ्यस्य वज्रलेपायितत्वात्,

एतेन सावरणोऽयमनावरणं रसं लब्ध्वेत्यादिवाचोयुक्तयः प्रत्युक्ताः, सावरणोऽनावरणः सन्नित्यादिनैव भवदिष्टसिद्धेः, तस्मादखिलानि कण्टकितसंकीर्णवर्त्मान्युत्सृज्य परिष्कृतघण्टापथेन संचरिष्णूनां रसविदामेष सिद्धान्तः—सः = प्रकृतः स्वरूपतटस्थलक्षणलक्षितो ब्रह्मपरमात्मपर्यायो भगवान्, वै = निश्चयेन, रसः = रसपदार्थं, तमेनं रसमेव = नापरं लब्ध्वा हि = यतः, अयं = स्वल्पानन्दो जीवः, आनन्दीभवति प्रशस्तानन्दो भवतीति, इत्थमेवोक्तौ प्रकृतशास्त्रस्य दर्शनताऽपि परमपुमर्थप्रापकतया सगच्छते,

न चावरणभङ्गवैशिष्ट्येऽपि परमपुमर्थसंपादकत्वाक्षतिरिति वाच्यम् ? तथा सत्युत्तरमीमांसयैव गतार्थतायां भवन्मते शास्त्रस्यानारम्भणीयताऽऽपत्तेः,

न चेष्टापत्तिः, अन्यैर्भवदभिमतानारम्भणेऽपि तुल्ययुक्त्येष्टापत्तेः सुवचत्वात्,

न चोत्तरमीमांसायामपि प्रस्थानान्तरे कथङ्कारं रसशास्त्रारम्भणीयतानिर्वाह इति शङ्क्यम् ? गुडजिह्विकान्यायेन तथोपेयप्रतिपत्त्यर्थां इत्यादिपूर्वोक्तयुक्तेः सार्थक्यसम्भवात्,

न चास्माभिरपि सार्थक्यमेवं सुसंपादमिति वक्तव्यम् ? अपारमार्थिकताविशाचीभयादेरभ्युपगन्तुं भवतोऽसामर्थ्यात्, प्रकृतशास्त्रकृदभिमतरसस्य भवन्मते चरमोपेयत्वाभावाच्च,

तथा च परमर्षिभरताचार्यसूत्रं—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति, अत्र विभावयन्ति आविर्भावयन्ति = उद्बोधयन्ति प्रसुप्तस्थायिनमिति विभावा आलम्बनानि उद्दीपनानि च, एवं च विषयतासंबन्धेन स्थायिविशिष्टमालम्बनं, स्वोद्बोधजनकतासंबन्धेन स्थायिविशिष्टमुद्दीपनं, स्थायिपोषकत्वे स त्वालम्बनचेष्टारूपोऽनुभावः, आलम्बनाऽवच्छेदेनाविर्भूष्णुतिरोभूष्णुः स्थायिपोषकरूपो व्यभिचारीति विवेचनीयं, सूत्रे पञ्चमी हेत्वर्था, हेतुत्वं तु कारकत्वज्ञापकत्वान्यतररूपं, ज्ञापकत्वं च—तद्विषयकज्ञानजनकज्ञानविषयत्वं, ज्ञानं चात्र त्रिविधं—प्रत्यक्षम्, अनुमितिः, शाब्दबोधश्च, प्रत्यक्षं तु द्विविध—यथाऽर्थमयथार्थं च, द्वितीयं पुनर्द्विधा दोषजन्यं भ्रमत्वेन प्रसिद्धम्, इच्छाजन्यम् आरोपत्वेन ख्यातम् ।

एवं च—दमयन्त्यादिदर्शनजनलादिसमवेतरत्याद्युद्बोधस्य तत्कार्यकटाक्षादिसहचरितोत्कण्ठाऽऽदीनां चानुकार्य्यनलादिनैव संबन्धात्तत्रैव रस उत्पन्नो; नटे तु तत्तद्नुकृत्या सादृश्यमूलकारोप इति भट्टलोल्लटादयः।

के चन नाट्यादिषु प्रकटविभावादिषु व्यञ्जनया नलादौ दमयन्त्यादिरतौ ज्ञातायां भावनादोषेण कल्पितनलत्वाद्यवच्छिन्ने स्वस्मिन् समुत्पन्नोऽनिर्वचनीयो-दमयन्त्यादिविषयकरत्यादिरेव रस इति समगिरिषत।

अन्ये तु व्यञ्जनाऽनिर्वचनीयख्यात्यनुपगमाद् भावनादोषेणात्मनि नलाद्यभेद-ग्राही दमयन्त्यादिरतिमदभेदबोधो विषयासत्त्वेऽपि मानसो भ्रम एव रस इत्यास्थिषत।

परे तु श्रीशङ्कुकानुयायिनः नलत्वेन गृहीते नटात्मके पक्षेऽकृत्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो रस इत्युपागमन्।

अपरे च नाट्यादिना व्यक्तिविशेषप्रतीतिनिरूपितत्वाभ्यां जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोषाद् रतित्वादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्ये-नानुभूतचररत्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्त्वोद्रेकेणानन्दरूपो रसः शब्दस्य भोगाख्यतृतीयव्यापारेण साक्षात् क्रियत इत्यभ्युपगुर्भट्टनायकानुवर्तिनः।

इत्थं स्वस्वशेमुषीविकाससाहाय्यकमवलम्ब्य, पारमर्षसूत्रपटकसंयोगपद्मीभि-प्यस्पर्थविविधतयाऽभियुक्ताः स्वस्वमतानुरूप्येण रसतत्त्वं प्राचीकशन्, परन्तु मुनि-संमतरहस्यानाकलाच्छाखसिद्धान्तिनामननुमतान्येवाखिलान्येवोक्तमतानि तदनुसा-रीणीतराणि चानिर्दिष्टान्येकदेशिमतानि।

इमानि चाश्रद्धाबीजानि संक्षेपतः प्रधानानि—

तत्र प्रथमे तावद् विप्रकृष्टत्वादलौकिकत्वात् कालनिकारोपविषयत्वादर्यान्तरता।

द्वितीयस्मिन् विमतानिर्वचनीयत्वाद् भ्रमविषत्वात्तथात्वम्।

तृतीयेऽपि भ्रमास्वदत्वं तादृशमेव।

तुरीये भेदग्रहेण बाधात् कथमपि भेदाग्रहेऽपि नलादौ भैम्यादिरतिमहस्य सामाजिकप्रवृत्त्यनौपयिकत्वात्, अन्यस्थले पक्षधर्मताज्ञानविरहाच्चाभिमतरसपरिप-न्थितोऽनिवार्य्यः।

पञ्चमे तु प्रमाणागोचरस्य शब्दनिष्ठत्रमिकव्यापारत्रयस्यैवारम्भुदतेति।

श्रीमदभिनवगुप्ताचार्यास्तु—विभावानुभावव्यभिचारिभिः संयोगाद्=व्यञ्ज-नाद्, रसस्य=स्थाय्युपहितचिदानन्दात्मनः, निष्पत्तिः=स्वरूपप्रकाश इति

सूत्रार्थं सिद्धान्तयन्ति स्म, फलबलकल्प्येन विभावादीनां साधारणीकरणात्मना व्यापारेण सर्वथा हि विशेषांशप्रमोषात् सामाजिकात्मनि स्थायी व्यज्यमानो रसः, दशमस्त्वमसीत्यादिरीतितः शब्दादप्यपरोक्षज्ञानाभ्युपगमाच्च पारोक्ष्यप्रयुक्तमपि वैरस्यम्, उक्तालौकिकव्यापारमहिम्ना लौकिककारणकार्यभावाभावाद् दुःखजनकतया क्लृप्तेभ्योऽपि सुखोत्पत्तेः सुरतक्षणरत्यधरदशनादाविवानुभविकत्वादन्तःकरणवृत्तित्वाच्चालौकिकं च निष्प्रत्यूहमेव, कार्यत्वज्ञाप्यत्वाभावाद् भूतवर्तमानभविष्यत्त्ववैधुर्यात् सविकल्पकनिर्विकल्पकवेद्यत्वविरहाच्च तादृशत्वं सुवचं, नित्यत्वानन्दत्वस्वप्रकाशत्वादिकं त्वात्मत्वादेव निर्विवादमेव, उत्पादविनाशिकादाचित्कत्वादिव्यवहारा अपि चर्वणानिबन्धना भवितुमर्हन्ति, इत्येवं निष्कर्षं तत्रभवन्मम्मटभट्टाः समाद्रियन्ते स्म, अन्येऽपि रसशास्त्रनिबन्धारः प्रायेणैनामेव दिशमनुसस्रुः ।

/ इयांस्तु विशेषः—एवमप्येतद्दिग्दर्शनविधया विनेयोन्मुखीकरणाय भरताचार्येण प्राकृतरसनिरूपणव्याजेन प्रदर्शितं, वास्तविकतयोद्देश्यभूतोऽप्राकृतरसस्तु श्रीभगवदालम्बनक एव तस्यैवाखिलशेषित्वेन चरमप्राप्यतया परमपुमर्थफलत्वेन चोपनिषत्स्मृतिपुराणादिषु व्यवस्थापितत्वेन निखिलशास्त्रदर्शनानां साक्षात्परम्परासाधारण्येन तन्निरूपणौपयिकभूय प्रकारानाश्रित्य तत्रैव पर्यवसानस्याखिलसमतत्वात् ।

एवं च निसर्गतोऽलौकिके तस्मिन् यादृगलौकिकतासंपादनाय नाट्यादिषु तादृशानन्दानुभवानुगुणसाधारणीकरणोररीकरणमुपेयते तादृशत्वस्यौत्सर्गिकतयाऽऽनन्दव्यक्तिप्रयोजकत्वांशे फलानुपधानेऽपि परत्रोपयोगित्वेन नाप्रयोजकताऽत एव प्रकारभेदोन्नयनाय आचार्यैरयं भक्तिरसनाम्ना व्यपदिश्यते व्यतानि चायमितोऽपि नैदिष्टविधाभिः श्रीकृष्णद्वैपायनादिभिराचार्यैरिति न तिरोहितं विशेषविदुषां,—रसमात्रस्य चास्य गौणमुख्यादिभेदाः तत्प्रभेदा विभावादीनां चातिभूमानः प्राप्तविभेदप्रकाराः प्रबन्धेन बहुषु निबन्धेषु निरूपिताः तत्तत्प्रकीर्णत्वादिरूपैस्तत्सर्वं पुनरवसरे कदाऽपि विज्ञसहृदयेभ्य उपायनीकरिष्यते, यत्तूपहृतं तन्निजसौजन्यगरिम्णा मरालचातुरीधुरीणाः स्वपरविवेचनविधुरा नैरपेक्ष्यपवित्रमनसाऽङ्गीकुर्वन्त्वित्याशासानो विरमति मुधा विलासः ।

इदानीं ग्रन्थकृत्संवृत्तं यथाविदितमितिहासप्रियलोकानां मुदे सूच्यते—अयं हि भगवद्भक्तिरसायनस्य कर्ता श्रीमधुसूदनसरस्वतीयतिः पूर्ववङ्गेषु फरीदपुरनगराभ्यणकोटालीपाडाग्रामस्थवैदिकश्रेणिस्थब्राह्मणरामचन्द्रभट्टाचार्यवंशज पुरन्दरमिश्र-

तनय कमलनयननामा श्रीनवद्वीपधामस्थाद् हरिरामतर्कवागीशादधीतान्वीक्षिकीक· विश्वेश्वरसरस्वतीतोऽधिगतप्रव्रज्यासंस्कारमधुसूदनसरस्वत्याख्यो माधवसरस्वती-कृपयाऽवाप्तब्रह्मविद्योऽधिकाशि चिरमुवासेति, वृत्तं श्रीनवद्वीपस्थनव्यन्यायास-दध्यापकमहामहोपाध्यायपरमपूज्य श्रीयदुनाथशर्मनैयायिकसार्वभौमभट्टाचार्यचरणे-भ्योऽध्ययनवेलायामेव प्रसङ्गतोऽस्माभिराकर्णि ।

काशीमधिवसंश्चायं महाभागोऽनेकानन्तेवासिनोऽध्यापयन्, तदानीं काशीस्थ-प्रतिष्ठितान्ववायिनं शेषोपाख्यगोविन्दनामानं छात्रमप्यध्यजीगपत, स खलु श्रीमच्छङ्कराचार्य्यपादनिबद्धस्य "सर्ववेदान्तसिद्धान्तरहस्या"ख्यग्रन्थस्य टीकां निर्माणान्ते—

"गुरुणा मधुसूदनेन यत्,<br>करुणाऽऽपूरितचेतसोपदिष्टम् ।<br>तदिद प्रकटीकृतं मयाऽस्मिन्<br>भगवच्छंकरपूज्यपादमूले"

पद्यमदो निबबन्ध,

अयं च शेषगोविन्दपण्डितः" कंसवधपारिजातहरणचम्पूकर्त्तु· शेषकृष्णविद्वद्व-रस्य तनय· इत्यपि तट्टीकाऽवसाने चूर्णिकालेखत स्पष्टमेव प्रतीयते,

शेषकृष्णमहोदयस्तु पेरुभट्टस्य विद्यागुरुरासीदिति तदानीन्तनभारतसम्राज· शाहजहाँनस्य विशिष्टप्रीतिकृपाऽऽस्पदतां भजमानस्य जगन्नाथपण्डितराजस्य रस गङ्गाधरारम्भपद्याशत स्फुटमवगम्यते, सुतरामुक्तसम्राट्समयासन्नकालवर्त्त्येव प्रकृतग्रन्थकार इति संभवमवलम्ब्य, षोडशी शताब्दी किलास्य समय इति निर्वि-चिकित्सम्, इदमित्थन्तया तु समयो नाधुनाऽप्यवधृत ।

श्रीमधुसूदनसरस्वतीकृता निबन्धास्त्वेतावन्त· समुपलभ्यन्ते—

१ अद्वैतसिद्धि· ।

२ वेदान्तकल्पलता ।

३ अद्वैततत्त्वरक्षणम् ।

४ श्रीमद्भागवतटीका ।

५ श्रीभगवद्गीताव्याख्या गूढार्थदीपिका ।

६ संक्षेपशारीरकव्याख्या सारसंग्रहः ।

७ श्रीशंकराचार्यपादकृताया "न भूमिर्न तोयमि"त्यादिदशश्लोक्या व्याख्या "सिद्धान्तबिन्दु" नामिका।

८ पुष्पदन्ताचार्यकृतस्य श्रीशिवमहिम्नस्तवस्य हरिहरपरा टीका।

९ वोपदेवकृतहरिलीलाऽऽख्यग्रन्थस्य टीका।

१० भगवद्भक्तिरसायनम्।

एषु तुरीयादिनवमान्ता निबन्धा व्याख्याऽऽत्मका, शिष्टाश्चत्वारस्तु स्वतन्त्राः, तुरीयमात्रं विहाय सर्वे पूर्णाः सुप्रापाश्च।

प्रकृतस्य भगवद्भक्तिरसायनस्योल्लासत्रयघटितस्य टीकाऽपि मूलकृतैवारब्धा परन्तु प्रथमोल्लासमात्रं व्याख्यातुमपारि, परस्तादन्तरायाकुलतया नारचीति किंवदन्त्यभियुक्ती।

सोऽयं ग्रन्थः प्रौढिम्नोपयोगितयाऽनितरत्रोपलब्धप्रमाणतर्कयुक्त्युपष्टब्धत्वेन च जगतः कियदुपकारालङ्कर्मीणतामावक्ष्यतीति विचक्षणाः सर्वपथीनशेमुषीका निर्मत्सरा शास्त्रसिद्धान्तमर्मानुसंधित्सव एवालोचनेनावगन्तारस्तदर्थमिह नायास्यतेऽस्माभिः।

कतिपयाब्दतः पूर्वं पूर्ववङ्गान्तर्गतपावनाप्रान्तीयतांडासाख्यधीशेन राज्ञाऽस्मदीयशिष्येण भगवदैकान्तिकभक्तिभाजा वनमालिदासमहोदयेन श्रीवृन्दावनसेविना श्रीभगद्राधाविनोदविग्रहं प्रतिष्ठाप्य, भक्तिकाण्डग्रन्थान् प्रचिकाशयिषुणाऽनेकाऽनेनान् प्रकाशय्यैकदेशोऽपि ग्रन्थः, प्रख्याततत्त्ववैदुषीकैद्वैतरहस्यप्रतिष्ठापकधुरीणैर्माध्वसम्प्रदायाचार्यैरचनीयचरणैरस्मत्तातगोस्वामिश्रीगोपीलालमहाराजैर्महता यत्नेन सगृह्य पुरपत्नमायाते स्वेन वर्धिते च श्रीवृन्दावनस्थेऽस्मदीयश्रीमदनगोपालपुस्तकालये रक्षितस्तत्र विराजमानेभ्यः सगीतागमपारदर्शिभ्यो माध्वसम्प्रदायाचार्येभ्यः पूज्यपादास्मद्भ्रातृविद्याभूषणश्रीवनमालिलालमहाराजेभ्य आनीय तदानींतनसबद्धप्रबन्धकेन नित्यस्वरूपब्रह्मचारिणा परिचायितेन केनापि संशोधय्य मुद्रितः किन्तु शोधकानवधानादिनाऽत्यन्तमशुद्धिपूर्णं एव मूलकृट्टीकाऽन्वितः प्रथमोल्लासात्मकः प्रकाशमलभत,

तदेवं जाते,ऽप्यस्य मुद्रणे,ऽशुद्धिदुष्टत्वेना,ऽपूर्णतया, च्यात्यन्तमुदतामवबुध्य, पुनरस्य प्रकाशनमिच्छुभिरास्मीयैरनिवार्यानुरोधैरवशिष्टोल्लासद्वयटीकापूर्तये भृशमनुरुध्यमानेन मया यथामति स्वरचितया प्रेमप्रपाऽऽख्यया टीकया विटीकोल्लासद्वयमटीकि,

परन्त्वतदर्हेणापि अनेनैनेनानुष्ठीयमानं साहसमेतत्क्षमिष्यन्ते सौजन्यधौरेया इति मत्वैव कश्मीरजमहार्घवस्त्रे शणवासःखण्डस्यूतिः कृता ।

तदिदं पूर्णटीकया समं भक्तिरसायनं विषयसूच्यादिना सध्रीचीनं श्रीमता विद्याऽऽलयादिविविधानुकरणीयसत्कर्त्तव्यसार्थकीकृतप्रमाणकमलेन विजवरेण विद्याऽनुरागिणा सौजन्यादिगुणशेवधिना भगवद्भक्तिभाजा श्रेष्ठिवर्येण गोयनकोपाह्वेन श्रीगौरीशंकरगुप्तमहोदयेन प्रकाश्यमानायामच्युतग्रन्थमालायां द्वितीयपुष्पत्वेन काश्यां विकासितम् ।

ग्रन्थस्यास्य पुस्तकमेकं पूर्वोक्त मुद्रितमादिमोल्लासात्मकं सटीकं, द्वितीयं च मूलमात्रं श्रीवृन्दावनस्थमुक्तचरमस्मदीयं, तृतीयं तु नानाग्रन्थसंग्रहैकरसिकस्य काशिकस्य देशोपकारकत्वप्रसिद्धस्य बाबूश्रीशिवप्रसादगुप्तस्य प्रतिलिप्यात्मकं यत् किलात्रत्यविश्वविद्याऽऽलयेऽध्यापकेन श्रीमता एम्० ए० पदवीकेन महतोपनामकेन पण्डितश्रीगङ्गाप्रसादशर्ममहोदयेन स्वयं विलिख्यास्मभ्य दत्तम् ,

एवं भगवत्कृपया निर्विघ्नं समाप्तमुद्रणेऽस्मिन्निबन्धरत्ने कृतज्ञतापाशितोऽनेकधन्यवादैरेकमहतामहोदयमभिनन्दयन्, शेषे च येन सूचिपत्रादिसंपादनेन भूयानस्मदायासो विभज्यात्तः तं बस्तिमण्डलवास्तव्यं सरयूपारीणं पङ्क्तिपावनान्वयजं काशिकविश्वविद्याऽऽलयीयोच्चश्रेणावायुर्वेदमधीयानं स्वशिष्यं श्रीमद्ब्रह्मशंकरशर्माणमप्यदभ्राशिषैधयमानः, प्रकृतनिबन्धरसास्वादलोलुपानभिरूपरूपान् मानुष्यकनान्तरीयकदोषजातत्रुटीरपेक्ष्यैतदालोचनायानुरन्धन्ननावश्यकविस्तरादुपरमन्;

प्रीयतां चानेन व्यापारेण भगवान् श्रीराधिकारमणतनुः श्रीगौरकृष्ण इति प्रार्थ्यते—

श्रीमन्माध्वसम्प्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाचार्य्य-
तर्करत्नन्यायरत्न—
गोस्वामिदामोदरशास्त्री ।

वै० सं० १९८४
श्रीवसन्तपञ्चम्यां-
काश्याम्

इति शम् ।

विषयसंख्या, पृ.-पं.

ग्रन्थान्ते सौकर्यार्थं पार्थक्येन मूलकारिकापाठश्च ।



ग्रन्थान्ते सौकर्यार्थं पार्थक्येन मूलकारिकापाठश्च ।



मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥

[ श्री० भा० ११ । ९ ]

इत्यादिना तस्यापि व्युत्पादनात् ।

तत्र "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टकाद्या पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्याग्रयणेष्टिः निरूढपशुबन्धः सौत्रामणी चेति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामइति सप्त सोमसंस्था" इत्यादिशास्त्रविहितो वर्णाश्रमधर्म्मरूपः कर्मयोगोऽन्तःकरणशुद्धिसाधनत्वेन तावत्पर्यन्तमनुष्ठेयः ।

तावत् कर्म्माणि कुर्व्वीत नो निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

[ श्री० भा० ११ । २० ]

इति भगवद्वचनाद्,

निर्व्विण्णचित्तं ब्राह्मणं ब्रह्मिष्ठं गुरुमुपासीतेत्यादिश्रुतेश्च ।

अन्तःकरणशुद्धिसाधनत्वं च तस्य "धर्मेण पापमपनुदति तस्माद्धर्म्मं परमं वदन्ति", "येन केन यज्ञेनापि वा दर्विहोमे नानुपहतमना एव भवती"त्यादिश्रुतिसिद्धम् ।

ततश्चाद्रुतचित्तस्य निर्व्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्व्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम्, ततोऽन्तःकरणशुद्ध्याऽष्टाङ्गयोगमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्पराऽऽत्मकैकाग्रतायोग्यं मनः सम्पादयेत् ।

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥

[ श्री० भा० ११ । ९ ]

इत्यादिना तस्यापि व्युत्पादनात् ।

तत्र "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणी संयोगः पञ्चानां यज्ञानामनुष्ठानमष्टकाद्या पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्याग्रयणेष्टिः निरूढपशुबन्धः सौत्रामणी चेति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामइति सप्त सोमसंस्था" इत्यादिशास्त्रविहितो वर्णाश्रमधर्म्मरूपः कर्मयोगोऽन्तःकरणशुद्धिसाधनत्वेन तावत्पर्यन्तमनुष्ठेयः ।

तावत् कर्म्माणि कुर्व्वीत नो निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

[ श्री० भा० ११ । २० ]

इति भगवद्वचनाद्,
निर्व्विण्णचित्त ब्राह्मणं ब्रह्मिष्ठं गुरुमुपासीतेत्यादिश्रुतेश्च ।

अन्तःकरणशुद्धिसाधनत्वं च तस्य "धर्मेण पापमपनुदति तस्माद्धर्म्मं परमं वदन्ति", "येन येन यज्ञेनापि वा दर्विहोमे नानुपहतमना एव भवती"त्यादिश्रुतिसिद्धम् ।

ततश्चाद्रुतचित्तस्य निर्व्वेदपूर्वकं तत्त्वज्ञानं द्रुतचित्तस्य तु भगवत्कथाश्रवणादिभागवतधर्मश्रद्धापूर्व्विका भक्तिरित्यवधित्वेन द्वयमप्युपात्तम्, ततोऽन्तःकरणशुद्ध्याऽष्टाङ्गयोगमनुष्ठाय तैलधारावदविच्छिन्नभगवदेकाकारप्रत्ययपरम्पराऽऽत्मकैकाग्रतायोग्यं मनः सम्पादयेत् ।

इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिलमपि प्रमाणं भगवत्येव प्रतिष्ठापयतः सकलविषयविमुखमनसो महाभागस्य कस्य चिद्भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणजनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभावव्यभिचारिसंयोगेन रसरूपतया "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि"ति;

विभावो द्विविधः—आलम्बनविभाव उद्दीपनविभावश्च, तत्रालम्बनविभावो भगवान्, उद्दीपनविभावः तुलसीचन्दनादिः, अनुभावो नेत्रविक्रियाऽऽदिः, व्यभिचारिणो भावा निर्वेदादयः, व्यक्तीभवद्भगवदाकारतारूपरसाख्यः स्थायी भावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोग इति तं परमं निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः;

'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥
यत्कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥
[ श्री० भा० ११।२०

इत्यादिभगवद्वचनानुसारिण्या साधनभक्तिनिष्ठया निखिल मपि प्रमाणं भगवत्येव प्रतिष्ठापयतः सकलविषयविमुखमनसो· महाभागस्य यस्य निजभगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवण जनितद्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीत भगवदाकारायां विभावानुभावव्यभिचारिसंयोगेन रसरूपतया "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरि"ति;

विभावो द्विविधः—आलम्बनविभाव उद्दीपनविभावश्च, तत्रालम्बनविभावो भगवान्, उद्दीपनविभावः तुलसीचन्द नादिः, अनुभावो नेत्रविक्रियाऽऽदिः, व्यभिचारिणो भावा निर्वेदादयः, व्यक्तीभवद्भगवदाकारतारूपरसात्मा यः स्थायी भावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोग इति तं परमं निरतिशयं पुरुषार्थं वदन्ति रसज्ञाः;

'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥
यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥
[ श्री० भा० ११।२०

धर्म्मार्थकामानां स्वतःपुरुषार्थत्वाभावात् तज्जन्यसुखस्यैव पुरुषार्थत्वे गौरवादननुगमाच्च, धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्, तस्य मोक्षसमीपवर्त्तितया मोक्षान्तर्भूतत्वे योगजधर्म्मजन्यतया धर्म्मान्तर्भूतत्वे वा; भक्तिसुखस्यापि भागवतधर्म्मजन्यतया धर्मान्तर्भावस्य श्रद्धाजडान् प्रति वक्तुं शक्यत्वाद्व भक्तस्य संसारमोक्षस्यावश्यकत्वाद्व मोक्षान्तर्गतो वा भक्तियोगः, तस्मात् पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वाऽयं भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्व्विवादम्।

तस्य परमानन्दरूपतामुपपादयन्नवान्तरविभागमाह—

"नवरसमिलितं वा केवलं वे" ति, स्पष्टमेतदुपरिष्टात् करिष्यते। "मुकुन्द" इति भक्तियोगस्य विषयनिर्देशः सर्वान्तर्यामी सर्वेश्वर एव भक्तिरसालम्बनविभाव इति वक्ष्यते,

ग्रन्थादौ मङ्गलमाचरतां—

सर्वदा सर्वकार्य्येषु नास्ति तेषाममङ्गलम्।
येषां हृदि स्थितो साक्षाद्व मङ्गलायतनं हरिः॥

इति स्मृतेः, "तमहं प्रपद्ये"ति अभिधेयसम्बन्धनिर्देशः, "शास्त्रदृष्ट्ये"त्यमूलत्वनिवारणम्, "अखिलतुष्ट्या"यिति प्रयोजननिर्देशः, साधूनां हि तुष्टिः स्वाभाविकी; अन्येषामप्येतद्ग्रन्थोक्तयुक्तिभिरसम्भावनाविपरीतभावनाऽऽदिनिवृत्त्याऽन्तःकरणशुद्धेर्हेतोरित्यभिप्रायः।

के पुनर्भक्तियोगस्य पुमर्थवादाः? शृणु तान्—

न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह।
वासुदेवे भगवति भक्तियोगो यतो भवेत्॥

[भी० भा० २। २]

धर्म्मार्थकामानां स्वतःपुरुषार्थत्वाभावात् तज्जन्यसुखस्यैव पुरुषार्थत्वे गौरवादननुगमाच्च, धर्मजन्यत्वादिविशेषणं परित्यज्य सुखमात्रं पुरुषार्थ इति स्थिते समाधिसुखस्येव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्, तस्य मोक्षसमीपवर्त्तितया मोक्षान्तर्भूतत्वे योगजधर्म्मजन्यतया धर्म्मान्तर्भूतत्वे वा; भक्तिसुखस्यापि भागवतधर्म्मजन्यतया धर्मान्तर्भावस्य श्रद्धाजडान् प्रति वक्तुं शक्यत्वाद्द भक्तस्य संसारमोक्षस्यावश्यकत्वाद्द मोक्षान्तर्गतो वा भक्तियोगः, तस्मात् पुरुषार्थचतुष्टयान्तर्गतत्वेन वा स्वातन्त्र्येण वाऽयं भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति निर्व्विवादम् ।

तस्य परमानन्दरूपतामुपपादयन्नवान्तरविभागमाह—

"नवरसमिलितं वा केवलं वे" ति, स्पष्टमेतदुपरिष्टात् करिष्यते। "मुकुन्द" इति भक्तियोगस्य विषयनिर्देशः सर्वान्तर्य्यामी सर्वेश्वर एव भक्तिरसालम्बनविभाव इति वक्ष्यते,

ग्रन्थादौ मङ्गलमाचरतां—

सर्वदा सर्वकार्य्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदि स्थितो साक्षाद्द मङ्गलायतनं हरिः ॥

इति स्मृतेः, "तमहं व्यनज्मी"ति अभिधेयसम्बन्धनिर्देशः, "शास्त्रदृष्ट्ये"त्यमूलत्वनिवारणम्, "अखिलतुष्ट्या"यिति प्रयोजननिर्देश', साधूनां हि तुष्टिः स्वाभाविकी; अन्येषामप्येतद्ग्रन्थोक्तयुक्तिभिरसम्भावनाविपरीतभावनाऽऽदिनिवृत्त्याऽन्तःकरणशुद्धेर्हेतोरित्यभिप्रायः ।

के पुनर्भक्तियोगस्य पुमर्थवादाः ? शृणु तान्—

न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥

[ भा० भा० २ । २ ]

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥
[श्री० भा० १ । २]

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
[श्री० भा० २ । ३]

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥
[श्री० भा० ६ । १]

गीतासु च—
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
[१८ अ । ५५]

इत्यादयः । अत्रान्यसाधनत्वेन साक्षादपुरुषार्थत्वं स्पष्टमेवोक्तम् ?

अत्रोच्यते—फलसाधनभेदेन भक्तिद्वैविध्योपपत्तेरदोषः, तथा हि—"भजनमन्तःकरणस्य भगवदाकारतारूपं भक्ति"रिति भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते, तस्य च निरतिशयपुमर्थत्वात् पूर्वोक्तवादानां प्रामाण्यमव्याहतम्, तथा "भज्यते सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनये"ति करणव्युत्पत्त्या भक्तिशब्देन श्रवणकीर्त्तनादि साधनमभिधीयते, तस्य च स्वयं पुरुषार्थत्वाभावात् साधनत्ववादानामपि प्रामाण्यमविरुद्धम् यथा "विज्ञप्तिर्विज्ञान"मिति भावव्युत्पत्त्या 'विज्ञानमानन्दो ब्रह्म' [ ३ । ६ । २८ बृ० आ० उ० ] इत्यत्र विज्ञानशब्दो ब्रह्मणि वर्त्तते, "विज्ञायतेऽनेने"ति करणव्युत्पत्त्या 'विज्ञानं यज्ञं तनुते' [ २ । ५ । १ । तैत्ति० उ० ] इत्यादावन्तःकरणे वर्त्तते तद्वत् । एतच्च स्पष्टीकृतं मधुसूदनेन—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥
[ श्री० भा० १ । ३]

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
[ श्री० भा० २ । ३

केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥
[श्री० भा० ६ ।

गीतासु च—
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥
[ १८ अ । ५

इत्यादयः । अत्रान्यसाधनत्वेन साक्षादपुरुषार्थत्वं स
मेवोक्तम् ?

अत्रोच्यते—फलसाधनभेदेन भक्तिद्वैविध्योपपत्तेरदोषः, त
हि—"भजनं-न्तःकरणस्य भगवदाकारतारूपं भक्ति"रि
भावव्युत्पत्त्या भक्तिशब्देन फलमभिधीयते, तस्य च निरतिश
पुमर्थत्वात् पूर्वोक्तवादानां प्रामाण्यमव्याहतम्, तथा "भ
सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनये"ति करणव्युत्प
भक्तिशब्देन श्रवणकीर्त्तनादि साधनमभिधीयते, तस्य च स
पुरुषार्थत्वाभावात् साधनत्ववादानामपि प्रामाण्यमविरुद्ध
यथा "विज्ञप्तिर्विज्ञान"मिति भावव्युत्पत्त्या 'विज्ञानमान
ब्रह्म' [ ३ । ६ । २८ बृ० आ० उ० ] इत्यत्र विज्ञानश
ब्रह्मणि वर्त्तते, "विज्ञायतेऽनेने"ति करणव्युत्पत्त्या 'वि
यज्ञं तनुते' [ २ । ५ । १ । तैत्ति० उ० ] इत्यादावन्तःक
वर्त्तते तद्वत् । एतच्च स्पष्टीकृतं मधुसूदनेन—

इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो-
यदुत्तमश्लोकगुणानुवर्णनम् ॥
[श्री० भा० १ स्क० ५ अ०]

निवृत्ततर्षैरुपगीयमानाद्
भवौषधाच्छ्रोत्रमनोऽभिरामाद् ।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नाद् ॥
[श्री० भा० १० स्क० १ अ०]

इत्यादौ साधनवचनं फलपरतया योजनीयम्, 'गोभिः श्रीणीत मत्सर' मितिवद्, अत्र हि गोप्रभवैः क्षीरैर्मत्सरं सोमं मिश्रयेदित्यर्थः स्थितः पूर्वतन्त्रे, उत्तरतन्त्रे च महतः परमव्यक्तमित्यत्राव्यक्त शब्दस्तत्प्रभवशरीरमाचष्ट इति स्थितमानुमानिकाधिकरणे "सूक्ष्मन्तु तदर्हत्वादि" त्यत्र । एवमत्रापि गुणानुवर्णनगुणानुवादशब्दौ तज्जन्यप्रीतिपरतया योज्यौ, अन्यथा परमपुरुषार्थतायोगात् ।

ननु तर्हि नामान्तरेण ब्रह्मविद्यैव भगवद्भक्तिरित्युक्तं तथा हि—

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ।
यज्ञेन दानेन तपसाऽनाशकेन
[४ । ४ । २२ । बृ० आ० उ०]

इत्यादिश्रुत्या सर्व्वसुकृतसाध्यत्वेन ब्रह्मविद्या प्रतिपादिता सर्वापेक्षाऽधिकरणे च तथैव निर्णीता, इहापि पूर्वोदाहृतवचनैः सर्व्वसुकृतसाध्यत्वेन लक्षणेन भगवद्भक्तेर्ब्रह्मविद्यारूपतायाः प्रतिपादनात्, तस्याश्च निरतिशयपुमर्थत्वस्य चतुर्लक्षणमीमांसयाऽ

इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धदत्तयोः।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम् ॥
[श्री० भा० १ स्क० ५ अ०]

निवृत्ततर्षैरुपगीयमानाद्
भवौषधाच्छ्रोत्रमनोऽभिरामात्।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात्
[श्री० भा० १० स्क० १ अ०]

इत्यादौ साधनवचनं फलपरतया योजनीयम्, 'गोभिः श्रीणीत मत्सर' मितिवद्, अत्र हि गोप्रभवैः क्षीरैर्मत्सरसोमं मिश्रयेदित्यर्थ स्थितः पूर्वतन्त्रे, उत्तरतन्त्रे च महतः परमव्यक्तमित्यत्राव्यक्त शब्दस्तत्प्रभवशरीरमाचष्ट इति स्थितमानुमानिकाधिकरणे "सूक्ष्मन्तु तदर्हत्वादि" त्यत्र। एवमत्रापि गुणानुवर्णनगुणानु वादशब्दौ तज्जन्यप्रीतिपरतया योज्यौ, अन्यथा परमपुरुषार्थता योगात्।

ननु तर्हि नामान्तरेण ब्रह्मविद्यैव भगवद्भक्तिरित्युक्त तथा हि—

तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति।
यज्ञेन दानेन तपसाऽनाशकेन
[४।४।२२। बृ० आ० उ०]

इत्यादिश्रुत्या सर्व्वसुकृतसाध्यत्वेन ब्रह्मविद्या प्रतिपादिता सर्वापेक्षाऽधिकरणे च तथैव निर्णीता, इहापि पूर्वोदाहृतवचनैः सर्व्वसुकृतसाध्यत्वेन लक्षणेन भगवद्भक्तेर्ब्रह्मविद्यारूपतायाः प्रति पादनात्, तस्याश्च निरतिशयपुमर्थत्वस्य चतुर्लक्षणमीमांसयाऽ

हित्वा स्वधर्म्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वाऽभद्रमभूदमुष्य किं-
को वाऽर्थ आप्तो भजतां स्वधर्म्मतः ॥
[ श्री० भा० १ स्क० ५ अ० ]

न वै जनो जातु कथञ्चनाव्रजे-
न्मुकुन्दसेव्यन्यवदङ्ग ! संसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो यतः ॥
[ श्री० भा० १ स्क० ५ अ० ]

सकृन्मनः कृष्णपदारविन्दयो-
र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्-
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥
[ श्री० भा० ६ स्क० १ अ० ]

इत्यादि । अत एवापचावपि दुःखासंस्पर्शित्वप्रतिपादनाया-स्पृष्टदुःखमिति विशेषणमुपात्तम्, अत एव च न परिणतिविरसेन स्वर्गादिना साम्यम्, एतेन लौकिकरसवैलक्षण्यमपि व्याख्यातम् ।

तस्यापि शास्त्राविहितत्वेन पापक्षयाहेतुत्वेनापत्तौ दुःखसंस्पर्शित्वात्, भक्तेस्तु दृष्टादृष्टफलतया महान् विशेषो वक्ष्यते ।

नन्वेवं सति भक्तिसुखाद्वैराग्यासम्भवेन मुमुक्षुत्वासम्भवात्तदधिकारिकचतुर्लक्षणमीमांसाऽऽरम्भो न स्यादिति चेत् ? सत्यम्; भक्तिसुखासक्तान् प्रति तस्या अनारम्भाद्, भजनीयस्वरूपनिर्णयार्थं भक्तानामपि तद्विचारस्यावश्यकत्वाच्च, भक्तिसुखाद्वैराग्यं न स्यादिति सिद्धमेव; नापादितम् ।

हित्वा स्वधर्म्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वाऽभद्रमभूदमुष्य किं
को वार्थ आप्तो भजतां स्वधर्म्मतः ॥

[ श्री० भा० १ स्क० ५ अ० ]

न वै जनो जातु कथञ्चनाव्रजे-
न्मुकुन्दसेव्यन्यवदङ्ग ! संसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो यतः ॥

[ श्री० भा० १ स्क० ५ अ० ]

सकृन्मनः कृष्णपदारविन्दयो
र्निवेशितं तद्गुणरागि यैरिह ।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥

[ श्री० भा० ६ स्क० १ अ० ]

इत्यादि । अत एवापत्तावपि दुःखासंस्पर्शित्वप्रतिपादनाया स्पृष्टदुःखमिति विशेषणमुपात्तम्, अत एव च न परिणतिविरसेन स्वर्गादिना साम्यम्, एतेन लौकिकरसवैलक्षण्यमपि व्याख्यातम् ।

तस्यापि शास्त्राविहितत्वेन पापक्षयाहेतुत्वेनापत्तौ दुःखसंस्पर्शित्वात्, भक्तेस्तु दृष्टादृष्टफलतया महान् विशेषो वक्ष्यते ।

नन्वेवं सति भक्तिसुखाद्वैराग्यासम्भवेन मुमुक्षासम्भवात्तदधिकारिकचतुर्लक्षणमीमांसाऽऽरम्भो न स्यादिति चेत् ? सत्यम्; भक्तिसुखासक्तान् प्रति तस्या अनारम्भाद्, भजनीयस्वरूपनिर्णयार्थं भक्तानामपि तद्विचारस्यावश्यकत्वाच्च, भक्तिसुखाद्वैराग्यं न स्यादिति लिष्टमेव; नापादितम् ।

तथा च शास्त्रम्—

मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्ति योगस्य निर्गुणस्य ह्युदाहृतम् ।

[ श्री० भा०३ स्कं० २९ अ० ]

अत्राविच्छिन्नेति धारावाहिकता दर्शिता, यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था, मयि सर्व्वगुहाशये मनोवृत्तिरिति सर्वेशाकारता, तेनाद्रवावस्थायां धारावाहिक्यपि वृत्तिर्द्रवावस्थायामाशु विनाशिनी सा द्रवत्वधारावाहिकत्वयुक्ताऽप्यसर्वेशविषया न भक्तिरित्युक्तम् ॥ ३ ॥

तदेव स्पष्टयितुं चित्तचेष्टितमाचष्टे—

## चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।
## तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥४॥

जतुनो हि दहनात्मकतापकयोगमन्तरेण काठिन्यशान्तिर्न भवति; सौरालोकादियोगे तु शिथिलीभावमात्रं न द्रुतिरिति सर्व्वसिद्धम्, एवं चित्तस्यापि वक्ष्यमाणकामादिविषयात्मकतापकसंयोगं विना न द्रवीभावो; विषयमात्रसंयोगपाटवे तु शिथिलीभावमात्रमिति तापकपदोपादानेन सूचितम् ॥ ४ ॥

तानेव तापकानाह—

## कामक्रोधभयस्नेहहर्षशोकदयाऽऽदयः ।
## तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥५॥

एषां प्रत्येकं लक्षणं भेदांश्च वक्ष्यति, यद्विषये कामादीनामुद्रेकस्तद्विषये चित्तस्य द्रवीभावः; पुनर्विषयान्तरसञ्चारादिना कामादितिरोभावे काठिन्यमेवेत्यर्थः ॥ ५ ॥

तथा च शास्त्रम्—

मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
लक्षणं भक्ति योगस्य निर्गुणस्य ह्युदाहृतम् ।
[ श्री० भा० ३ स्क० २९ अ० ]

अत्राविच्छिन्नेति धारावाहिकता दर्शिता, यथा गङ्गाम्भस इति दृष्टान्तेन दार्ष्टान्तिकेऽपि मनसि द्रवावस्था, मयि सर्व्वगुहाशये मनोवृत्तिरिति सर्वेशाकारता, तेनाद्रवावस्थायां धारावाहिक्यपि वृत्तिर्द्रवावस्थायामाशु विनाशिनी सा द्रवत्वधारावाहिकत्वयुक्ताऽप्यसर्वेशविषया न भक्तिरित्युक्तम् ॥ ३ ॥

तदेव स्पष्टयितुं चित्तचेष्टितमाचष्टे—

**चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ।**
**तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥४॥**

जतुनो हि दहनात्मकतापकयोगमन्तरेण काठिन्यशान्तिर्न भवति; सौरालोकादियोगे तु शिथिलीभावमात्रं न द्रुतिरिति सर्व्वसिद्धम्, एवं चित्तस्यापि वक्ष्यमाणकामादिविषयात्मकतापकसंयोगं विना न द्रवीभावो; विषयमात्रसंयोगपाटवे तु शिथिलीभावमात्रमिति तापकपदोपादानेन सूचितम् ॥ ४ ॥

तानेव तापकानाह—

**कामक्रोधभयस्नेहहर्षशोकदयाऽऽदयः ।**
**तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥५॥**

एषां प्रत्येकं लक्षणं भेदांश्च वक्ष्यति, यद्विषये कामादीनामुद्रेकस्तद्विषये चित्तस्य द्रवीभावः; पुनर्विषयान्तरसञ्चारादिना कामादितिरोभावे काठिन्यमेवेत्यर्थः ॥ ५ ॥

भगवदाकारता प्रविष्टा स सर्व्वदा तद्भानात् कृतकृत्यो भवतीत्युक्तम्,

सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥
[श्री० भा० ११ स्क० २ अ०]

इति सर्व्वभूतग्रहणसमयेऽपि द्रवावस्थाप्रविष्टाया भगवदाकारताया एव प्रकाशनाज्जतुरङ्गवत् सर्व्वभूते भगवद्भानोपपत्तिः स च भागवतोत्तमः, एतादृशसंस्कारस्याविनाशित्वादिति भावः। अत एव ब्रह्मविदेवैतादृश इत्यपास्तम्, तस्य ब्रह्मविदो द्रवावस्थाया अनपेक्षितत्वेनोत्तममध्यमप्राकृतभक्तेष्वगणनीयत्वात्, अत्र तु द्रवावस्थापरिपुष्टौ "सर्व्वभूतेषु यः पश्ये" दित्यवस्थायां भागवतोत्तमः उक्तः, ईषद्द्रवावस्थायान्तु वासनाऽऽभासेन—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः॥
[श्री०भा० ११ स्क० २ अ०]

इत्युक्तम्, एतादृगवस्थावतोऽग्रे द्रवावस्थाया उत्पत्स्यमानत्वादित्यर्थः। यस्य तु चित्ते न द्रवावस्था पुष्टा नापीषदुत्पन्ना किन्तु स्वयं तदर्थं भागवतधर्म्मान् श्रद्धयाऽनुतिष्ठति स काठिन्यावस्थाविनाशसामग्र्यविशिष्टः—

अर्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतःस्मृतः॥
[श्री० भा० ११ स्क० २ अ०]

इत्युक्तम्, प्रकृतिरारम्भस्तस्यां वर्त्तमानः प्राकृतः, साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः।

इयमेव द्रवावस्था प्रणयानुरागस्नेहादिशब्दैरपि सङ्कीर्त्यते, यथा—

भगवदाकारता प्रविष्टा स सर्व्वदा तद्ध्यानात् कृतकृत्यो भवतीत्युक्तम् ,

सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

[ श्री० भा० ११ स्क० २ अ० ]

इति सर्व्वभूतग्रहणसमयेऽपि द्रवावस्थाप्रविष्टाया भगवदाकारताया एव प्रकाशनाज्जतुरङ्गवत् सर्व्वभूते भगवद्ध्यानोपपत्तिः स च भागवतोत्तमः, एतादृशसंस्कारस्याविनाशित्वादिति भावः। अत एव ब्रह्मविदेवैतादृश इत्यपास्तम्, तस्य ब्रह्मविदो द्रवावस्थाया अनपेक्षितत्वेनोत्तममध्यमप्राकृतभक्तेष्वगणनीयत्वाद्, अत्र तु द्रवावस्थापरिपुष्टौ "सर्व्वभूतेषु यः पश्ये" दित्यवस्थायां भागवतोत्तमः उक्तः, ईषद्द्रवावस्थायान्तु वासनाऽऽभासेन—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥

[ श्री०-भा० ११ स्क० २ अ० ]

इत्युक्तम् , एतादृगवस्थावतोऽग्रे द्रवावस्थाया उत्पत्स्यमानत्वादित्यर्थः । यस्य तु चित्ते न द्रवावस्था पुष्टा नापीषदुत्पन्ना किन्तु स्वयं तदर्थं भागवतधर्म्मान् श्रद्धयाऽनुतिष्ठति स काठिन्यावस्थाविनाशसामग्र्यविशिष्टः—

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतःस्मृतः ॥

[ श्री० भा० ११ स्क० २ अ० ]

इत्युक्तम्, प्रकृतिरारम्भस्तस्यां वर्त्तमानः प्राकृतः, साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः ।

इयमेव द्रवावस्था प्रणयानुरागस्नेहादिशब्दैरपि सङ्कीर्त्यते, यथा—

प्रेमातिभारनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ।
आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने ! ॥
[श्री० भा० १ स्क० ६ अ०]

अनेनोत्तमो भागवतोत्तमः साधनाभ्यासपरिपाकेणोत्तमभूमिलाभः ॥८॥

द्रवावस्थाप्रविष्टविषयाकारस्यानपायित्वे स्थायिशब्दोऽपि तत्र मुख्य एव न पारिभाषिक इत्याह—

स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥९॥

विभावानुभावव्यभिचारिसंयोगेनाभिव्यक्तः स्थायिभाव एव सभ्याभिनेययोर्भेदतिरोधानेन सभ्यगत एव सन् परमानन्दसाक्षात्काररूपेण रसतामाप्नोतीति रसविदां मर्य्यादा ।

तदुक्तमाचार्य्यभरतेन—

'विभावानुभावव्यभिचारिसंयोगाद्र रसनिष्पत्ति'रिति, अतो भक्तेरपि रसतां वक्तुं स्थायिभावो निरूप्यत इति भावः ॥९॥

स्थायिभावस्य रसतोपपत्तये परमानन्दरूपतामुपपादयति—

भगवान् परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकाररसतामेति पुष्कलम् ॥१०॥

बिम्बमेव ह्युपाधिनिष्ठत्वेन प्रतीयमानं प्रतिबिम्बमित्युच्यते, परमानन्दश्च भगवान् मनसि प्रतिबिम्बितः स्थायिभावतामासाद्य रसतामापादयतीति भक्तिरसस्य परमानन्दरूपत्वं निर्विवादम्, नाप्यालम्बनविभावस्थायिभावयोरैक्यं बिम्बप्रतिबिम्बभावत्वेन भेदस्य व्यवहारसिद्धत्वाद्, ईशजीवयोरिव ॥१०॥

विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशाभिहितोऽप्यघौघनाशः।
प्रणयरशनया घृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः॥
[श्री० भा० ११ स्क० २ अ०]

प्रणयो द्रवावस्था स एव रशना रज्जुवद् बन्धनसाधनं तस्यां द्रवावस्थायां प्रविष्टस्य पुनर्निर्गमनाभावादित्यर्थः, द्रवावस्थाप्रविष्टभगवत्स्वरूपभानस्य त्रिविधत्वादुत्तमभागवतोऽपि त्रिविधः, तत्राद्यं प्रपञ्चसत्यत्वभानसहितं यथा—

खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्रांश्च हरेः शरीरं
यत् किञ्च भूतं प्रणमेदनन्यः॥
[श्री० भा० ११ स्क० २ अ०]

इत्यादि, अनेन प्राकृतो भागवतोत्तमः। द्वितीयं प्रपञ्चमिथ्यात्वभानसहितं यथा—

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत् सदिवावभाति॥
[श्री० भा० १० स्क० १४ अ०]

अनेन मध्यमो भागवतोत्तमः। तृतीयं प्रकारद्वयेनापि प्रपञ्चभानरहितं यथा—

ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः॥

सदज्ञातञ्च तद् ब्रह्म मेयं कान्ताऽऽदिमानतः ।
मायावृतितिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥

अज्ञातज्ञापकत्वेनैव हि सर्व्वेषां मानानां मानता, अन्यथा स्मृतेरपि मानताऽऽपत्तेः, अज्ञातञ्च स्वप्रकाशतया भासमानचैतन्यमेव, न जडं तस्य भानाप्रसक्त्या तत्रावरणकृत्याभावाद्, अतः कान्ताऽऽदिगोचरमानानामज्ञातज्ञापकत्वेन प्रामाण्याय तत्तदवच्छिन्नचैतन्यमेव विषयो वाच्यः, अन्यथा तदयोगात्, तथा च सात्त्विक्या प्रमाणजनितापरोक्षवृत्त्याऽऽवरणतिरोभावे सति तत्तद्विषयावच्छिन्नत्वेन भासते, वस्तुतः परमानन्दरूपविषयोपादानचैतन्यावच्छिन्नचैतन्यस्वरूपाभानाच्च न सद्यो मुक्तिः स्वप्रकाशभङ्गो वा ॥ १२ ॥

ततः किमत आह—

अतस्तदाविर्भावित्वं मनसि प्रतिपद्यते।
किञ्चिन्न्यूनाञ्च रसतां याति जाड्यविमिश्रणात्॥१३॥

विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्यारूढतयाऽऽविर्भावित्वं प्राप्य रसतां प्राप्नोतीति न लौकिकरसस्यापि परमानन्दरूपताऽनुपपत्तिः, अत एवानवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणाद्भक्तिरसेऽत्यन्ताधिक्यमानन्दस्य, लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात् तत्रानन्दस्य न्यूनतैव, तस्माद्भक्तिरस एव लौकिकरसानुपेक्ष्य सेव्य इत्यर्थः ॥१३॥

इति वेदान्तसिद्धान्तस्थापिना रसतोदिता ।
साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपद्यते ॥१४॥

स्थायिनो रसतेत्यनुषङ्गः ॥ १४ ॥

सदज्ञातञ्च तद् ब्रह्म मेयं कान्ताऽऽदिमानतः।
मायावृतितिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥

अज्ञातज्ञापकत्वेनैव हि सर्व्वेषां मानानां मानता, अन्यथा स्मृतेरपि मानताऽऽपत्तेः, अज्ञातञ्च स्वप्रकाशतया भासमानचैतन्यमेव, न जडं तस्य भानाप्रसक्तया तत्रावरणकृत्याभावाद्, अतः कान्ताऽऽदिगोचरमानानामज्ञातज्ञापकत्वेन प्रामाण्याय तत्तदवच्छिन्नचैतन्यमेव विषयो वाच्यः, अन्यथा तदयोगात्, तथा च सात्त्विक्या प्रमाणजनितापरोक्षवृत्त्याऽऽवरणतिरोभावे सति तत्त द्विषयावच्छिन्नत्वेन भासते, वस्तुतः परमानन्दरूपविषयोपादान चैतन्यावच्छिन्नचैतन्यस्वरूपाभानाच्च न सद्यो मुक्तिः स्वप्रकाश भङ्गो वा ॥ १२ ॥

ततः किमत आह—

अतस्तदाविर्भावित्वं मनसि प्रतिपद्यते।
किञ्चिन्न्यूनाञ्च रसतां याति जाड्यविमिश्रणात्॥१३॥

विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्यारूढतयाऽऽविर्भावित्वं प्राप्य रसतां प्राप्नोतीति न लौकिकरसस्यापि परमानन्दरूपताऽनुपपत्तिः, अत एवानवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणाद्भक्तिरसेऽत्यन्ताधिक्यमानन्दस्य, लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात् तत्रानन्दस्य न्यूनतैव, तस्माद्भक्तिरस एव लौकिकरसानुपेक्ष्य सेव्य इत्यर्थः ॥१३॥

इति वेदान्तसिद्धान्तस्थापिना रसतोदिता।
साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपद्यते ॥१४॥

स्थायिनो रसतेत्यनुषङ्गः ॥ १४ ॥

त्रिगुणात्मकमेकैकं वस्तु त्र्याकारमीर्यते ।
निजमानससङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥१६॥

न तावदान्तरवाह्ययोस्तादात्म्यसम्भवः, वाह्यानामेव मनः प्रतिविम्बितत्वेनान्तरत्वात्, नापि सर्व्वान् प्रति तुल्यभानप्रसङ्गः तत्तद्वासनारूपसहकारिभेदात् ॥ १६ ॥

एतदेवोदाहरति—

कामिन्याः सुखता भर्त्ता सपत्न्या दुःखरूपता ।
तदलाभात्तथाऽन्येन मोहत्वमनुभूयते ॥१७॥

भर्त्तारं प्रति हि कामिन्याः सत्त्वांश एवोद्रिच्यते, सपत्नीं प्रति तु रजोंऽश एव, तां कामयमानमन्यञ्च तामविन्दन्तं तमोंऽश एव, अतः क्रमेण तेषु सुखदुःखविषादाः प्रादुर्भवन्त्यतो व्यवस्थोपपत्तिः वासनाभेदेनैकस्मिन्नपि भानभेदो भट्टाचार्य्यैरप्युक्तः

"परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पना" इति ॥१६॥

फलितमाह—

एवं सति सुखाकारः प्रविष्टो मानसे यदा ।
तदा स स्थायिभावत्वं प्रतिपद्य रसो भवेत् ॥१८॥

क्रोधादिभावस्यापि रजस्तमोऽमिश्रितसत्त्वोद्रेकनिवन्धनचित्तद्रुतिफलितत्वात् सुखमयत्वमित्यभिप्रायः, द्रवीभावस्य सत्त्वधर्म्मत्वं विना च स्थायिभावासम्भवात् सत्त्वगुणस्य च सुखरूपत्वात् सर्व्वेषां भावानां सुखमयत्वेऽपि रजस्तमोंऽशमिश्रणात्तारतम्यमवगन्तव्यम्, अतो न सर्व्वेषु रसेषु तुल्यसुखानुभवः । उपरिष्टाच्च स्पष्टीकरिष्यते ॥ १८ ॥

त्रिगुणात्मकमेकैकं वस्तु त्र्याकारमीच्यते ।
निजमानससङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥१६॥

न तावदान्तरबाह्ययोस्तादात्म्यसम्भवः, बाह्यानामेव मन प्रतिबिम्बितत्वेनान्तरत्वात्, नापि सर्व्वान् प्रति तुल्यभानप्रसङ्ग तत्तद्वासनारूपसहकारिभेदात् ॥ १६ ॥

एतदेवोदाहरति—

कामिन्याः सुखता भर्त्ता सपत्न्या दुःखरूपता ।
तदलाभात्तथाऽन्येन मोहत्वमनुभूयते ॥१७॥

भर्त्तारं प्रति हि कामिन्याः सत्त्वांश एवोद्रिच्यते, सपत्नीं प्रति तु रजोंऽश एव, तां कामयमानमन्यञ्च तामविन्दन्तं तमोंऽश एव, अत क्रमेण तेषु सुखदुःखविषादाः प्रादुर्भवन्त्यतो व्यवस्थोपपत्तिः वासनाभेदेनैकस्मिन्नपि भानभेदो भट्टाचार्य्यैरप्युक्त

"परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पना" इति ॥१७॥

फलितमाह—

एवं सति सुखाकारं प्रविष्टो मानसे यदा ।
तदा स स्थायिभावत्वं प्रतिपद्य रसो भवेत् ॥१८॥

क्रोधादिभावस्यापि रजस्तमोऽमिश्रितत्वोद्रेकनिबन्धनचित्तद्रुतिफलितत्वात् सुखमयत्वमित्यभिप्राय, द्रवीभावस्य सत्त्वधर्म्मत्वात्तं विना च स्थायिभावासम्भवात् सत्त्वगुणस्य च सुखरूपत्वात् सर्व्वेषां भावानां सुखमयत्वेऽपि रजस्तमोंऽशमिश्रणात्तारतम्यमवगन्तव्यम्, अतो न सर्व्वेषु रसेषु तुल्यसुखानुभवः । उपरिष्टाच्च स्पष्टीकरिष्यते ॥ १८ ॥

दुःखेच्छाज्ञानादीनां तदाश्रयत्वाभ्युपगमात्, तेषाञ्च सर्व्वशरीरव्यापित्वेनोपलम्भात्, तदाश्रयस्य मनसोऽपि सर्व्वशरीरव्यापित्वाद् अणुत्वाभावे युगपत्सर्व्वेन्द्रियसम्बन्धसम्भवाद् युगपज्ज्ञानाज्ञानोत्पत्तिप्रसङ्ग इति चेद् ? न—एकेनेन्द्रियेणैकदैकमेव ज्ञानं जन्यत इति नियमस्तावदावयोः समः, अन्यथा युगपच्चाक्षुषज्ञानद्वयोत्पत्तिः किं न स्यात् ? नानेन्द्रियजन्यज्ञानानान्तु युगपदुत्पत्तिरिष्यत एव दीर्घां शष्कुलीं भक्षयतः शब्दस्पर्शरूपरसगन्धानां युगपदनुभवात्, सुषुप्त्यन्यथाऽनुपपत्त्या त्वङ्मनःसंयोगजं ज्ञानमत्र कारणत्वेन त्वयाऽभ्युपगमाद् रसनावच्छिन्नत्वङ्मनःसंयुक्तस्य गुडस्य युगपद्रसस्पर्शोपलम्भस्तवापि दुर्निवारः, तस्मान्नास्मदभ्युपगते मनसि श्रुतिस्मृतिन्यायसिद्धे विमतिः सम्भवति, समनन्तरप्रत्ययस्त्वतिनिर्युक्तिकत्वादुपेक्षितः, विस्तरस्त्वस्मदीयवेदान्तकल्पलतायामनुसन्धेयः ॥१६॥

अतः स्वच्छस्वभावस्य सावयवस्य मनसो दर्पणादिवद् विषयाकारग्राहकत्वं वेदान्तशास्त्रे साङ्ख्यशास्त्रे च यन्निरूपितं तत् प्रामाणिकत्वाद्वेदान्ते समीचीनमेवेत्याह—

गृह्णाति विषयाकारं मनो विषययोगतः ।
इति वेदान्तिभिः साङ्ख्यैरपि सम्यङ् निरूपितम् ॥२०॥

यद्यपि साङ्ख्यानामाहङ्कारिकं मनः; ब्रह्मवादिनान्तु मते भौतिकमिति महान् विशेषस्तथाऽपि विषयाकारग्राहकत्वं समानमिति तुल्यवदुभयोरुपन्यासः ॥२०॥

द्रवीभावपूर्व्वकं चित्तस्य विषयाकारभजनमित्यत्र भाष्यकारवचनमुदाहरति—

दुःखेच्छाज्ञानादीनां तदाश्रयत्वाभ्युपगमात्, तेषाञ्च सर्व्वशरीरव्यापित्वेनोपलम्भात्, तदाश्रयस्य मनसोऽपि सर्व्वशरीरव्यापित्वाद्द अणुत्वाभावे युगपत्सर्व्वेन्द्रियसम्बन्धसम्भवाद्द युगपन्नानाज्ञानोत्पत्तिप्रसङ्ग इति चेद्द ? न—एकेनेन्द्रियेणैकदैकमेव ज्ञानं जन्यत इति नियमस्तावदावयोः समः, अन्यथा युगपच्चाक्षुषज्ञानद्वयोत्पत्तिः किं न स्यात् ? नानेन्द्रियजन्यज्ञानानान्तु युगपदुत्पत्तिरिष्यत एव दीर्घां शष्कुलीं भक्षयतः शब्दस्पर्शरूपरसगन्धानां युगपदनुभवात्, सुषुप्त्यन्यथाऽनुपपत्त्या त्वङ्मनःसंयोगजं ज्ञानमत्र कारणत्वेन त्वयाऽभ्युपगमाद्द रसनावच्छिन्नत्वङ्मनःसंयुक्तस्य गुडस्य युगपद्रसस्पर्शोपलम्भस्त्वयापि दुर्निवारः, तस्मान्मासदभ्युपगते मनसि श्रुतिस्मृतिन्यायसिद्धे विमतिः सम्भवति, समनन्तरप्रत्ययस्त्वतिनिर्युक्तिकत्वादुपेक्षितः, विस्तरस्त्वस्मदीयवेदान्तकल्पलतायामनुसन्धेयः ॥१६॥

अतः स्वच्छस्वभावस्य सावयवस्य मनसो दर्पणादिवद्द विषयाकारग्राहकत्वं वेदान्तशास्त्रे साङ्ख्यशास्त्रे च यन्निरूपितं तत् प्रामाणिकत्वाद्वेदान्ते समीचीनमेवेत्याह—

गृह्णाति विषयाकारं मनो विषययोगतः ।
इति वेदान्तिभिः साङ्ख्यैरपि सम्यङ् निरूपितम्॥२०॥

यद्यपि साङ्ख्यानामाहङ्कारिकं मनः; ब्रह्मवादिनान्तु मते भौतिकमिति महान् विशेषस्तथाऽपि विषयाकारग्राहकत्वं समानमिति तुल्यवदुभयोरुपन्यासः ॥२०॥

द्रवीभावपूर्व्वकं चित्तस्य विषयाकारभजनमित्यत्र भाष्यकारवचनमुदाहरति—

स्याभिनिष्पत्तिर्भवति तच्च परिमाणविशेषात्मकं मानं निष्पन्नं सच्चक्षुरादिद्वारा घटादिविषयपर्य्यन्तं गच्छति, शरीरावच्छिन्नमन्तःकरणमत्यजदेव कुल्याजलवद्, ततश्च घटादिसम्बद्धं सद् मेयाकारतां प्राप्नोति, ततश्च तत्र चैतन्याभिव्यक्त्या घटाद्युपलम्भ इति कारिकाऽर्थः। सर्व्वा चेयं प्रक्रियाऽस्माभिर्विस्तरेण सिद्धान्तबिन्दौ प्रतिपादिता, ग्रन्थगौरवभिया नोदाह्रियते ॥ २३ ॥

पञ्चदश्यां विद्यारण्यैरप्ययमर्थो दर्शितः, तमुपसंहारव्याजेनाह—

अतो मांसमयी योषित् काचिदन्या मनोमयी।
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥२४॥

मनोमयाकारभेदं विनैकस्मिन् भौतिके पिण्डे भेदप्रत्यया योगात् ॥२४॥

भेदप्रतीतिमेव सर्व्वसिद्धामुदाहरति—

भार्य्या स्नुषा ननान्दा च याता मातेत्यनेकधा।
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥२५॥

भिद्यत इत्यनुषङ्गः ॥२५॥

एकानेकत्ववैधर्म्यमुक्त्वा विनाशित्वाविनाशित्ववैधर्म्यान्तरमाह—

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥२६॥

अपिशब्दाद्बाह्यस्य देशकालादिना व्यवधानेऽपि मनोमयोऽव्यवहित एवेत्यर्थः ॥२६॥

एवं स्वभावतो भावस्वरूपमुपवर्णितम्।
विशेषेण तु सर्व्वेषां लक्षणं वक्ष्यते पृथक् ॥२७॥

मनोमयो विषयाकार एवाविनाशित्वात् स्थायीति कथि-

स्याभिनिष्पत्तिर्भवति तच्च परिमाणविशेषात्मकं मानं निष्प सच्चक्षुरादिद्वारा घटादिविषयपर्य्यन्तं गच्छति, शरीरावच्छिन्न न्तःकरणमत्यजदेव कुल्याजलवद्, ततश्च घटादिसम्बद्धं स मेयाकारतां प्राप्नोति, ततश्च तत्र चैतन्याभिव्यक्त्या घटाद्युपलम्भ इति कारिकाऽर्थः। सर्व्वा चेयं प्रक्रियाऽस्माभिर्विस्तरेण सिद्धान्तबिन्दौ प्रतिपादिता, ग्रन्थगौरवभिया नोदाह्रियते ॥ २३ ॥

पञ्चदश्यां विद्यारण्यैरप्ययमर्थो दर्शितः, तमुपसंहारव्याजेनाह—

अतो मांसमयी योषित् काचिदन्या मनोमयी।
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥२४॥

मनोमयाकारभेदं विनैकस्मिन् भौतिके पिण्डे भेदप्रत्ययायोगात् ॥२४॥

भेदप्रतीतिमेव सर्व्वसिद्धामुदाहरति—

भार्य्या स्नुषा ननान्दा च याता मातेत्यनेकधा।
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥२५॥

भिद्यत इत्यनुषङ्गः ॥२५॥

एकानेकत्ववैधर्म्यमुक्त्वा विनाशित्वाविनाशित्ववैधर्म्यान्तरमाह—

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥२६॥

अपिशब्दाद्बाह्यस्य देशकालादिना व्यवधानेऽपि मनोमयोऽव्यवहित एवेत्यर्थः ॥२६॥

एवं स्वभावतो भावस्वरूपमुपवर्णितम्।
विशेषेण तु सर्व्वेषां लक्षणं वक्ष्यते पृथक् ॥२७॥

मनोमयो विषयाकार एवाविनाशित्वात् स्थायीति कथि-

भक्तिश्च द्रवता चेतसा विना कथं स्यात्? द्रवचित्तश्च कथं रोमहर्षमानन्दाश्रु विना जायत इत्यर्थः।

स्तम्भस्वेदादीनामप्युलक्षणम्, यतो द्रवत्वाभावे चित्तं न वासयते ऽतो बुधाः पण्डिताः कामक्रोधादिनाऽस्यन्दीभूतपाषाणादि प्रतिमतया ज्ञानमुपेक्षाज्ञानं संस्कारजनकमित्याहुः।

तथा चाहुर्न्यायवार्त्तिककृतः—

"यन्न सुखसाधनं न दुःखसाधनं तदेवोपेक्षणीय" मिति सुखसाधने रागः संस्कारहेतुर्दुःखसाधने द्वेषस्तथा तदुभयाभावे तु चित्तद्रवत्वाभावान्न जायते संस्कार इत्यर्थः, एतावान् हि सर्व्वेषां शास्त्राणां रहस्यभूतोऽर्थो यद्व विषयाकारतानिराकरणपूर्व्वकं चित्तस्य भगवदाकारतासम्पादनम् सर्व्वेषामपि शास्त्राणामत्रैव व्यापारभेदेन पर्य्यवसानात् ॥२९॥

नन्वनादिकाले द्रवचित्ते प्रविष्टतत्तदिष्टानिष्टविषयकोटिसङ्कीर्णता चित्तस्य स्वभावभूता शीततेव तोयस्योष्णतेव दहनस्य मन्त्ररिष्णुतेव पवनस्य कथं निवर्त्ततां धर्म्मिणि सत्यसति वा स्वभावानुपमर्दादित्यत आह—

काठिन्यं विषये कुर्य्याद् द्रवत्वं भगवत्पदे।
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः ॥३०॥

विषयाकारता हि न चित्तस्य स्वभावभूता तस्या आगन्तुकहेतुजन्यत्वात्, तथा हि—स्थूलविषयाकारताहेतुरिन्द्रियसन्निकर्षादि जागरणे, सूक्ष्मविषयाकारताहेतुर्मनोगतवासना स्वप्ने, तदुभयाभावे तु सुषुप्तिवन्निर्विषयमेव चित्तं भवति, सुषुप्तौ चित्तलयाभिधानं निर्विषयकत्वाभिप्रायमेव एतच्च भगवता सूत्रकारेणैव प्रदर्शितम्—

"तदापीतेः संसारव्यपदेशात् (ब्रह्मसू॰।४।२।८सू॰) अपीति

भक्तिश्च द्रवता चेतसा विना कथं स्यात्? द्रवचित्तश्च कथं रोमहर्षमानन्दाश्रु विना जायत इत्यर्थः।
स्तम्भस्वेदादीनामप्युलक्षणम्, यतो द्रवत्वाभावे चित्तं न वास्यते
ऽतो बुधाः पण्डिताः कामक्रोधादिनाऽस्यन्दीभूतपाषाणादिप्रतिमतया ज्ञानमुपेक्षाज्ञानं संस्काराजनकमित्याहुः।

तथा चाहुर्न्यायवार्त्तिककृतः—

"यन्न सुखसाधनं न दुःखसाधनं तदेवोपेक्षणीय" मिति सुखसाधने रागः संस्कारहेतुर्दुःखसाधने द्वेषस्तथा तदुभयाभावे तु चित्तद्रवत्वाभावान्न जायते संस्कार इत्यर्थः, एतावान् हि सर्व्वेषां शास्त्राणां रहस्यभूतोऽर्थो यद्द विषयाकारतानिराकरणपूर्व्वकं चित्तस्य भगवदाकारतासम्पादनम् सर्व्वेषामपि शास्त्राणामत्रैव व्यापारभेदेन पर्य्यवसानात् ॥२६॥

नन्वनादिकाले द्रवचित्ते प्रविष्टतत्तदिष्टानिष्टविषयकोटिसङ्कीर्णता चित्तस्य स्वभावभूता शीततेव तोयस्योष्णतेव दहनस्य मञ्जरिष्णुतेव पवनस्य कथं निवर्त्तताम् धर्म्मिणि सत्यसति वा स्वभावानुपमर्दादित्यत आह—

काठिन्यं विषये कुर्य्याद् द्रवत्वं भगवत्पदे।
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमनो बुधः ॥३०॥

विषयाकारता हि न चित्तस्य स्वभावभूता तस्या आगन्तुकहेतुजन्यत्वात्, तथा हि—स्थूलविषयाकारताहेतुरिन्द्रियसन्निकर्षादि जागरणे, सूक्ष्मविषयाकारताहेतुर्मनोगतवासना स्वप्ने, तदुभयाभावे तु सुषुप्तिवन्निर्विषयमेव चित्तं भवति, सुषुप्तं चित्तलयाभिधानं निर्विषयकत्वाभिप्रायमेव एतच्च भगवता सूत्रकारेणैव प्रदर्शितम्—

"तदापीतेः संसारव्यपदेशात् (ब्रह्मसू।४।२।८सू) अपीति

यथाऽग्निना हेम मलं जहाति
ध्मातं पुनः सम्भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
यथा यथाऽऽत्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥
विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामेव स्मरतश्चित्तं मय्येव प्रविलीयते ॥
तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥

(श्री० भा० ११ स्क० १४ अ०)

एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्व्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥

(श्री० भा० ११ स्क० १३ अ०)

स च श्रीकपिलदेवेनोक्तः—

अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥

(श्री० भा० ३ स्क० २७ अ०)

यथाऽग्निना हेम मलं जहाति
ध्मातं पुनः सम्भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥
यथा यथाऽऽत्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥
विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामेव स्मरतश्चित्तं मय्येव प्रविलीयते ॥
तस्मादसदभिध्यानं यथा स्वप्नमनोरथम् ।
हित्वा मयि समाधत्स्व मनो मद्भावभावितम् ॥

(श्री० भा० ११ स्क० १४ अ०)

एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्व्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥

(श्री० भा० ११ स्क० १३ अ०)

स च श्रीकपिलदेवेनोक्तः—

अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम् ॥
ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनैरग्नेर्योनिरिवारणिः ॥

(श्री० भा० ३ स्क० २७ अ०)

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्व्वगे ॥ इत्यादि ।

[श्री० भा० ११ स्क० ११ अ०]

अयमत्र निष्कर्षः—चित्तेष्वाकारसमर्पका विषयास्ते भगवद्व्यतिरिक्ता न भवन्ति भगवत्यध्यस्तत्वाद् भगवंत एव सद्रूपतया घटः सन् पटः सन्नित्यादिसदाकारेणैव सर्व्वविषयाणां स्फुरणात् । "सर्वं खल्विदं ब्रह्म" "तज्जलानि" इति छान्दो० ३।१४।१ श्रुत्या भगवदेकोद्भवत्वभगवदेकस्थितत्वभगवदेकलयत्वेन मृद्घटवदभेदबोधनात् स्वप्नादिप्रपञ्चवद्बाध्यत्वाच्च । अत एव भगवदाकारस्फूर्त्या ते सर्व्वे निवर्त्तमाना सद्रूपा एव भवन्ति, अधिष्ठानज्ञाननिवर्त्त्यत्वादध्यस्तानाम् । एवं सति विषयनिष्ठः सर्व्वोऽपि प्रेमा भगवत्येवार्पितो भवति तद्व्यतिरिक्तास्फुरणाद्; एतादृशी चावस्था प्रह्लादेन प्रार्थिता—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्प्पतु ॥ इति

(वि० पु० १ अंश २० अ० १९)

तस्मादेतादृशयुक्त्यनुसन्धानेन सर्वाधिष्ठानसन्मात्रं परिपूर्णसच्चिदानन्दघनं भगवन्तमद्वयमात्मानं निश्चिन्वता स्वाप्निकविषयेष्विव जाग्रद्विषयेष्वप्यनुगतानुसन्धानेन वैराग्यं महदुपजायते वशीकाराख्यम्, एतच्च सूत्रितं भगवता पतञ्जलिना—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति

(पात० सू०)

चतुर्व्विधं हि वैराग्यं साध्यसाधनभावापन्नमागमप्रसिद्धम्; तत्र महता प्रयासेनापि चित्तदोषानवश्यं निराकरिष्यामीत्यध्यवसायात्मकं प्रथमं यतमानसंज्ञं वैराग्यम् । ततो निरन्तरमुपायानुष्ठाने क्रियमाण एतावन्तो दोषा इदानीं क्षीणा·

एवं जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि ।
उपारमेत विरजं मनो मय्यर्प्य सर्व्वगे ॥ इत्यादि।

[श्री० भा० ११ स्क० ११ अ० ]

अयमत्र निष्कर्षः—चित्तेष्वाकारसमर्पका विषयास्ते भगवद्व्यतिरिक्ता न भवन्ति भगवत्यध्यस्तत्वाद् भगवत एव सद्रूपतया घटः सन् पटः सन्नित्यादिसदाकारेणैव सर्व्वविषयाणां स्फुरणात् । "सर्वं खल्विदं ब्रह्म" "तज्जलानि" इति छान्दो० ३।१४।१ श्रुत्या भगवदेकोद्भवत्वभगवदेकस्थितत्वभगवदेकलयत्वेन मृद्घटवदभेदबोधनात् स्वप्नादिप्रपञ्चवद्बाध्यत्वाच्च। अत एव भगवदाकारस्फूर्त्या ते सर्व्वे निवर्त्तमाना सद्रूपा एव भवन्ति, अधिष्ठानज्ञाननिवर्त्यत्वादध्यस्तानाम् । एवं सति विषयनिष्ठः सर्व्वोऽपि प्रेमा भगवत्येवार्पितो भवति तद्व्यतिरिक्तास्फुरणाद्; एतादृशी चावस्था प्रह्लादेन प्रार्थिता—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्प्पतु ॥ इति

( वि० पु० १ अंश २० अ० १९)

तस्मादेतादृशयुक्त्यनुसन्धानेन सर्वाधिष्ठानसन्मात्र परिपूर्णसच्चिदानन्दघनं भगवन्तमद्वयमात्मानं निश्चिन्वता स्वाप्निकविषयेष्विव जाग्रद्विषयेष्वप्यनुगतानुसन्धानेन वैराग्यं महदुपजायते वशीकाराख्यम्, एतच्च सूचितं भगवता पतञ्जलिना—
"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसञ्ज्ञा वैराग्यम्" इति

( पात० सू० )

चतुर्व्विधं हि वैराग्यं साध्यसाधनभावापन्नमागमप्रसिद्धम् ; तत्र महता प्रयासेनापि चित्तदोषानस्य निराकरिष्यामीत्यध्यवसायात्मकं प्रथमं यतमानसञ्ज्ञं वैराग्यम् । ततो निरन्तरसदुपायानुष्ठाने क्रियमाणे एतावन्तो दोषा इदानीं क्षीणा

एतादृशदशायाश्च भगवत्प्रेमाऽऽनन्दपराकाष्ठामधिरोहतीति त प्रति भगवतोक्तम्—

क्षात्रधर्म्मस्थितो जन्तूनवधीर्मृगयाऽऽदिभिः।
समाहितस्तत्तपसा जह्यघं मदपाश्रयः॥
जन्मन्यनन्तरे राजन्! सर्व्वभूतसुहृत्तमः।
भूत्वा द्विजवरस्त्वं वै मामन्ते ब्रह्म यास्यसि। इति।
[श्री० भा० १० स्क० ५१ अ०]

अपरवैराग्यञ्च सूत्रितम् पतञ्जलिना—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति। तेन च न प्रेमकाष्ठेति न तदानीमेव कृतार्थता परवैराग्याभावेन भक्तिप्रकर्षाभावात् तस्यैव च कृतकृत्यताहेतुत्वादित्यर्थः। परवैराग्यलिङ्गं मोक्षपर्य्यन्तं सकलफलनिरपेक्षत्वं, यथा—

इमं लोकं तथैवामुमात्मानमुभयायिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः॥
विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतो मुखम्।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये॥
[श्री० भा० ३ स्क० २५ अ०

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥
[श्री० भा० ३ स्क० २९ अ०

नैकात्मतां मे स्पृहयन्ति के चि
न्मत्पादसेवाऽभिरता मदीहाः।
येऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि॥
[श्री० भा० ३ स्क० २५ अ०

एतादृशदशायाञ्च भगवत्प्रेमाऽऽनन्दपराकाष्ठामधिरोहती
त प्रति भगवतोक्तम्—

क्षात्रधर्म्मस्थितो जन्तूनवधीर्मृगयाऽऽदिभिः।
समाहितस्तत्तपसा जह्यघं मदपाश्रयः॥
जन्मन्यनन्तरे राजन्! सर्व्वभूतसुहृत्तमः।
भूत्वा द्विजवरस्त्वं वै मामन्ते ब्रह्म यास्यसि। इति।
[श्री० भा० १० स्क० ५१ अ०]

अपरवैराग्यञ्च सूत्रितम् पतञ्जलिना—"दृष्टानुश्रविकवि
षयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" इति। तेन च न प्रेमका
ष्ठेति न तदानीमेव कृतार्थता परवैराग्याभावेन भक्तिप्रकर्षा
भावात् तस्यैव च कृतकृत्यताहेतुत्वादित्यर्थः। परवैराग्यलिङ्ग
मोक्षपर्य्यन्तं सकलफलनिरपेक्षत्वं, यथा—

इमं लोकं तथैवामुमात्मानमुभयायिनम्।
आत्मानमनु ये चेह ये रायः पशवो गृहाः॥
विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतो मुखम्।
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये॥
[श्री० भा० ३ स्क० ३५ अ०]

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥
[श्री० भा० ३ स्क० २९ अ०]

नैकात्मतां मे स्पृहयन्ति के चि
न्मत्पादसेवाऽभिरता मदीहाः।
येऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि॥

[श्री० भा० ३ स्क० २५ अ०]

तथा —यस्य भक्तिर्भगवति हरौ निःश्रेयसात्मनि ।
विक्रीडतोऽमृताम्भोधौ किं तुच्छैः खातकोदकैः ॥
[ श्री० भा० ६ स्क० १२ अ० ]

वृत्रः—न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं न रसाऽधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जस ! त्वां विरहय्य काङ्क्षे ॥
( श्री० भा० ६ स्क० ११ अ० )

श्रुतयः—दुरधिगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः ।
न परिलषन्ति के चिदपवर्गमपीश्वर ! ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥
( श्री० भा० १० स्क० ८७ अ० )

एवमन्यदप्यूहनीयम् । एतादृशमोक्षपर्यन्तसकलफलनिरपेक्षस्वरूपे परवैराग्ये सति; फलान्तरे प्रेम्णोऽनुदयात् परमानन्दरूपे परमात्मन्येव प्रेमा परां काष्ठामारोहति यथा वृत्रस्य—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधाऽऽर्त्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष ! दिदृक्षते त्वामिति ॥
[ श्री० भा० ६ स्क० ११ अ० ]

अत एव ज्ञानं विना परवैराग्याभावस्तदृते च भगवत्प्रेमपरकाष्ठाऽभावात्तदर्थं ज्ञानवैराग्ये दृढीकर्त्तव्ये, तदुक्तम्—

असेवयाऽयं प्रकृतेर्गुणानां-
ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुन्धे ॥
[ श्री० भा० ३ स्क० २५ अ० ]

(य)था —यस्य भक्तिर्भगवति हरौ निःश्रेयसात्मनि ।
विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥
[ श्री० भा० ६ स्क० १२ अ०

(वृ)त्रः—न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं न रसाऽधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जस ! त्वां विरहय्य काङ्क्षे ॥
( श्री० भा० ६ स्क० ११ अ० )

श्रुतयः—दुरधिगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ! ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥
( श्री० भा० १० स्क० ८७ अ० )

एवमन्यदप्यूहनीयम् । एतादृशमोक्षपर्यन्तसकलफलनिरपेक्षस्वरूपे परवैराग्ये सति; फलान्तरे प्रेम्णोऽनुदयात् परमानन्दरूपे परमात्मन्येव प्रेमा परां काष्ठामारोहति यथा वृत्रस्य—

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधाऽऽर्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष ! दिदृक्षते त्वामिति ॥
[ श्री० भा० ६ स्क० ११ अ० ]

अत एव ज्ञानं विना परवैराग्याभावस्तदृते च भगवत्प्रेमपरकाष्ठाऽभावात्तदर्थं ज्ञानवैराग्ये दृढीकर्त्तव्ये, तदुक्तम्—

असेवयाऽयं प्रकृतेर्गुणानां-
ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुन्धे ॥
[ श्री० भा० ३ स्क० २५ अ० ]

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ! ।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ इति ॥
गीता ७ अ०

वासुदेवातिरिक्तं सर्वं नास्ति मायिकत्वेन तुच्छत्वाद्, वासुदेव एवात्मत्वात् प्रियतमः सत्यः स्थायिभाव इत्यर्थः । एतादृशज्ञानपूर्वकवैराग्यञ्च दर्शितम्—

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥
कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ।
[ श्री० भा० ११ स्क० १९ अ० ]

तथाऽन्यत्र—

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम् ॥
नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥
एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्त्तिनाम् ॥ इति ॥
[ श्री० भा० ११ स्क० ३ अ० ]

कीदृशी भगवद्धर्मानुष्ठानाद्धर्मज्ञानवैराग्यपूर्विका भगवति भक्तिरुदेतीत्याकाङ्क्षायामुक्तम्—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ! ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ इति ॥
गीता ७ अ०

वासुदेवातिरिक्तं सर्वं नास्ति मायिकत्वेन तुच्छत्वाद्, वासुदेव एवात्मत्वात् प्रियतमः सत्यः स्थायिभाव इत्यर्थः । एतादृशज्ञानपूर्वकवैराग्यञ्च दर्शितम्—

श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् ।
प्रमाणेष्वनवस्थानाद्विकल्पात् स विरज्यते ॥
कर्मणां परिणामित्वादाविरिञ्च्यादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ।
[ श्री० भा० ११ स्क० १९ अ० ]

तथाऽन्यत्र—

कर्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्य्यासं मिथुनीचारिणां नृणाम् ॥
नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥
एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्त्तिनाम् ॥ इति ॥
[ श्री० भा० ११ स्क० ३ अ० ]

कीदृशी भगवद्धर्मानुष्ठानाद्दृज्ञानवैराग्यपूर्विका भगवति भक्तिरुदेतीत्याकाङ्क्षायामुक्तम्—

सर्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्य्यमहिंसाञ्च समत्वं द्वन्द्वसंज्ञयोः ॥
सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तं चीरवसनं सन्तोषं येन केन चित् ॥
श्रद्धां भागवते शास्त्रे निन्दामन्यत्र चापि हि ।
मनोवाक्कायदण्डञ्च सत्यं शमदमावपि ॥
श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥
इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥
एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्य्यां चोभयत्र महत्सु नृषु साधुषु ॥
परस्परानुकथनं पावनं भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥
क चिद्रुदन्त्यच्युतचिन्तया क चि—
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं—
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥
इति भागवतान् धर्मान् शिक्षेद्भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ इति ।
[ श्री० भा० ११ स्क० ३ अ० ]

तस्मादेवंविधैः शास्त्रीयैरुपायैर्मनःशुद्धिं सम्पादयेदित्यर्थः ।२०॥

सर्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्य्यमहिंसाञ्च समत्वं द्वन्द्वसंज्ञयोः ॥
सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तं चीरवसनं सन्तोषं येन केन चित् ॥
श्रद्धां भागवते शास्त्रे निन्दामन्यत्र चापि हि ।
मनोवाक्कायदण्डञ्च सत्यं शमदमावपि ॥
श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्मणः ।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥
इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् यत् परस्मै निवेदनम् ॥
एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्य्यां चोभयत्र महत्सु नृषु साधुषु ॥
परस्परानुकथनं पावनं भगवद्यशः ।
मिथो रतिर्मिथस्तुष्टिर्निर्वृतिर्मिथ आत्मनः
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम् ॥
क चिद्रुदन्त्यच्युतचिन्तया क चि—
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं—
भवन्ति तूष्णीं परमेत्य निर्वृताः ॥
इति भागवतान् धर्मान् शिक्षेद्भक्त्या तदुत्थया ।
नारायणपरो मायामञ्जस्तरति दुस्तराम् ॥ इति ।
[ श्री० भा० ११ स्क० ३ अ० ]

तस्मादेवंविधैः शास्त्रीयैरुपायैर्मनःशुद्धिं सम्पादयेदित्यर्थः ।३०।

एवं प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म एवात्मरुचिः प्रजायते ॥
तत्रान्वहं कृष्णकथाः प्रगायता-
मनुग्रहेणाशृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विशृण्वतः
प्रियश्रवस्यङ्ग ! ममाभवद्रुचिः ॥
तस्मिंस्तदा लब्धरुचेर्महामते !
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाऽहमेतत् सदसत्स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे ॥
इत्थं शरत्प्रावृषिकावृतू हरे-
र्विशृण्वतो मेऽनुसवं यशोऽमलम् ।
संकीर्त्त्यमानं मुनिभिर्महात्मभि-
र्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोऽपहा ॥
तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥
ज्ञानं गुह्यतमं यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायाऽनुभावमविदं येन गच्छन्ति तत्पदम् ॥
एतत् संसूचितं ब्रह्मँस्त्वया यद्विचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥
आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥

एवं प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म एवात्मरुचिः प्रजायते ॥
तत्रान्वहं कृष्णकथाः प्रगायता-
मनुग्रहेणाशृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विशृण्वतः
प्रियश्रवस्यङ्ग ! ममाभवद्रुचिः ॥
तस्मिंस्तदा लब्धरुचेर्महामते !
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाऽहमेतत् सदसत्स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे ॥
इत्थं शरत्प्रावृषिकावृतू हरे
र्विशृण्वतो मेऽनुसवं यशोऽमलम् ।
संकीर्त्यमानं मुनिभिर्महात्मभि
र्भक्तिः प्रवृत्ताऽऽत्मरजस्तमोऽपहा ॥
तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥
ज्ञानं गुह्यतम यत्तत् साक्षाद्भगवतोदितम् ।
अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥
येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायाऽनुभावमविदं येन गच्छन्ति तत्पदम् ॥
एतत् संसूचितं ब्रह्मँस्त्वया यद्विचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥
आमयो यश्च भूताना जायते येन सुव्रत !
तदेव ह्यामय द्रव्यं न पुनाति चिकित्सितम् ॥
एव नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥
मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥
त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥
[ श्री० भा० ३ स्क० २५ अ० ]

तथा—

यत्पादसंश्रयाः सूत ! मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥
[ श्री० भा० १ स्क १ अ० ]

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥
[ श्री० भा० १ स्क० १८ अ० ]

तथा—

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः !
संसारेऽस्मिन् क्षणार्द्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥
( श्री० भा० ११ स्क० २ अ० )

तथा—

न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव !
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणाः ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गः सर्व्वसङ्गापहो हि माम् ॥

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ॥
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥
मदाश्रयाः कथामृष्टाः शृण्वन्ति कथयन्ति च ।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः ॥
त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥
[ श्री० भा० ३ स्क० २५ अ० ]

तथा—

यत्पादसंश्रयाः सूत ! मुनयः प्रशमायनाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ॥
[ श्री० भा० १ स्क १ अ० ]

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥
[ श्री० भा० १ स्क० १८ अ० ]

तथा—

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥
अत आत्यन्तिकं क्षेमं पृच्छामो भवतोऽनघाः !
संसारेऽस्मिन् क्षणार्द्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ॥
( श्री० भा० ११ स्क० २ अ० )

तथा—

न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव !
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणाः ॥
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथाऽवरुन्धे सत्सङ्गः सर्व्वसङ्गापहो हि माम् ॥

विद्यत एव फलतया भगवत्सङ्गापेक्षेति, व्याख्याता द्विविधा महत्सेवा । तद्दयापात्रता ततः । तेषां महतां स्वविषयाद् स्वकीयैः सुशीलताऽऽदिगुणैर्भवति ते च गुणा भगवतोक्ताः—

कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम् ।
सदासारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चन ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥

( श्री० भा० ११ स्क० ११ अ० )

तथा—

मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ।
अमानी मत्सरो दक्षो निर्म्ममो दृढसौहृदः ॥
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ।
जायाऽपत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥
उदासीनः समं पश्यन् सर्वेष्वर्थमिवात्मनः ।

[ श्री० भा० ११ स्क० १० अ० ]

इत्यादि । उदाहरणं प्रह्लादो यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ।
आत्मवत् सर्व्वभूतानामेकः प्रियसुहृत्तमः ॥
दासवत् संनतार्याङ्घ्रिः पितृवत् दीनवत्सलः ।
भ्रातृवत् सदृशः स्निग्धो गुरुष्वीश्वरभावनः ।
विद्याऽर्थरूपजन्माढ्यो मानदम्भविवर्जितः ॥

विद्यत एव फलतया भगवत्सङ्गापेक्षेति, व्याख्याता द्विविधा महत्सेवा । तद्दयापात्रता ततः । तेषां महतां स्वविषयाद् स्वकीयैः सुशीलताऽऽदिगुणैर्भवति ते च गुणा भगवतोक्ताः—

कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम् ।
सदासारोऽनवद्यात्मा समः सर्व्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चन ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥

( श्री० भा० ११ स्क० ११ अ० )

तथा—

मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम् ।
अमानी मत्सरो दक्षो निर्म्ममो दृढसौहृदः ॥
असत्वरोऽर्थजिज्ञासुरनसूयुरमोघवाक् ।
जायाऽपत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥
उदासीनः समं पश्यन् सर्वेष्वर्थमिवात्मनः ।

[ श्री० भा० ११ स्क० १० अ० ]

इत्यादि । उदाहरणं प्रह्लादो यथा—

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ।
प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ।
आत्मवत् सर्व्वभूतानामेकः प्रियसुहृत्तमः ॥
दासवत् संनतार्याङ्घ्रिः पितृवत् दीनवत्सलः ।
भ्रातृवत् सदृशः स्निग्धो गुरुष्वीश्वरभावनः ।
विद्याऽर्थरूपजन्माढ्यो मानदम्भविवर्जितः ॥

इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।
बद्धाञ्जलीन् राजपुत्रान् नारायणपरो वचः ॥
[ श्री० भा० ४ स्क० २४ अ० ]

इत्यादौ रुद्रप्राचेतससंवादे, यथा वा
ते मय्यपेताखिलचापलेऽर्भके ।
[ श्री० भा० १ स्क० ५ अ० ]

इत्यत्र । स्वमयत्नापेक्षा यथा ध्रुवनारदसंवादे ध्रुवः—

सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसा दुर्दर्शोऽस्मद्विधैस्तु यः ॥
अथापि मेऽविनीतस्य क्षात्त्रं धर्म्ममुपेयुषः ।
सुरुच्या दुर्व्वचोबाणैर्न भिन्ने श्रयते हृदि ॥
पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे ।
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥
नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः ।
वितुदन्नटते वीणां हिताय जगतोऽर्कवत् ॥
इत्युदीरितमाकर्ण्य भगवान् नारदस्तदा ।
प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥

श्रीनारद उवाच—

जनन्याऽभिहितः पन्थाः स वै निःश्रेयसस्य ते ।
भगवान् वासुदेवस्त्वं भज तत्प्रवणात्मना ॥
धर्म्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकं ह्येव हरेस्तत्र कारणं पादसेवनम् ॥
तत् तात ! गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः ॥
[ श्री० भा० ४ स्क० ८ अ० ]

इत्यनुक्रोशहृदयो भगवानाह ताञ्छिवः ।
बद्धाञ्जलीन् राजपुत्रान् नारायणपरो वचः ॥
[ श्री० भा० ४ स्क० २४ अ० ]

इत्यादौ रुद्रप्राचेतससंवादे, यथा वा
ते मय्यपेताखिलचापलेऽर्भके ।
[ श्री० भा० १ स्क० ५ अ० ]

इत्यत्र । स्वमयत्नापेक्षा यथा ध्रुवनारदसंवादे ध्रुवः—

सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसा दुर्दर्शोऽस्मद्विधैस्तु यः ॥
अथापि मेऽविनीतस्य क्षात्त्रं घोरमुपेयुषः ।
सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥
पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे ।
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥
नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः ।
वितुदन्नटते वीणां हिताय जगतोऽर्कवत् ॥
इत्युदीरितमाकर्ण्य भगवान् नारदस्तदा ।
प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥

श्रीनारद उवाच—

जनन्याऽभिहितः पन्थाः स वै निःश्रेयसस्य ते ।
भगवान् वासुदेवस्तं भज तत्प्रवणात्मना ॥
धर्म्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकं ह्येव हरेस्तत्र कारणं पादसेवनम् ॥
तत् तात ! गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः ॥
[ श्री० भा० ४ स्क० ८ अ० ]

तथा परीक्षितः—

नैषाऽतिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥

[ श्री० भा० २ स्क० ३ अ०

इत्यादि । अथ वा शौनकादीनाम्—

आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्त्ते यः क्षणो नीत उत्तमश्लोकवार्त्तया ॥

[ भा० २ स्क० ३ अ० १७

बिले बतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य ।
जिह्वाऽसती दार्दुरिकेव सूत !
न चोपगायत्युरुगायगाथाः ॥
भारः परं पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्य्यां—
हरेर्लसत्काञ्चनकङ्कणौ वा ॥
बर्हायिते ते नयने नराणां—
लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ ॥
जीवञ्छवो भागवताङ्घ्रिरेणून्
न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुलस्याः
श्वसञ्छवो यस्तु न वेद गन्धम् ॥
तदश्मसारं हृदयं बतेदं—
यद्‍ गृह्यमाणैर्हरिनामधेयैः ।

तथा परीक्षितः—

नैषाऽतिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥

[ श्री० भा० २ स्क० ३ अ० ]

इत्यादि । अथ वा शौनकादीनाम्—

आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्त्तया ॥

[ भा० २ स्क० ३ अ० १७ ]

बिले बतोरुक्रमविक्रमान् ये
न शृण्वतः कर्णपुटे नरस्य ।
जिह्वाऽसती दार्दुरिकेव सूत !
न चोपगायत्युरुगायगाथाः ॥
भारः परं पट्टकिरीटजुष्ट
मप्युत्तमाङ्गं न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्य्या—
हरेर्लसत्काञ्चनकङ्कणौ वा ॥
बर्हायिते ते नयने नराणां—
लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्या ॥
जीवञ्छवो भागवताङ्घ्रिरेणून्
न जातु मर्त्योऽभिलभेत यस्तु ।
श्रीविष्णुपद्या मनुजस्तुलस्याः
श्वसञ्छवो यस्तु न वेद गन्धम् ॥
तदश्मसारं हृदयं बतेदं—
यद्‌ गृह्यमाणैर्हरिनामधेयैः ।

वदन्ति तेऽन्योन्यमुपासितस्त्रियो—
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं—
वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥
श्रिया विभूत्याऽभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्म्मणा ।
जातस्मयेनान्धधियः सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥
सर्व्वेषु शश्वत् तनुभृत्स्ववस्थितं—
यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतञ्च न शृण्वतेऽबुधा—
मनोरथानां प्रवदन्ति वार्त्तया ॥

[ श्री० भा० ११ स्क० ५ अ० ]

हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥

[ श्री० भा० ११ स्क० ५ अ० ]

न भजति कुमनीषिणां स इज्यां—
हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्म्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥

[ श्री० भा० ४ स्क० ३१ अ० ]

एवमन्यदप्यूहनीयम् । तस्माद्भगवद्धर्म्मश्रद्धा भवति तृतीया भूमिका ।

ततो हरिगुणश्रुतिः । यथा—

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्त-
लीलातनोस्तदनुरूपविडम्बनानि ।

वदन्ति तेऽन्योन्यमुपासितस्त्रियो—
गृहेषु मैथुन्यपरेषु चाशिषः ।
यजन्त्यसृष्टान्नविधानदक्षिणं—
वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥
श्रिया विभूत्याऽभिजनेन विद्यया
त्यागेन रूपेण बलेन कर्म्मणा ।
जातस्मयेनान्धधियः सहेश्वरान्
सतोऽवमन्यन्ति हरिप्रियान् खलाः ॥
सर्व्वेषु शश्वत् तनुभृत्स्ववस्थितं—
यथा खमात्मानमभीष्टमीश्वरम् ।
वेदोपगीतञ्च न शृण्वतेऽबुधा—
मनोरथानां प्रवदन्ति वार्त्तया ॥

[ श्री० भा० ११ स्क० ५ अ० ]

हित्वाऽत्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखाः ॥

[ श्री० भा० ११ स्क० ५ अ० ]

न भजति कुमनीषिणां स इज्यां—
हरिरधनात्मधनप्रियो रसज्ञः ।
श्रुतधनकुलकर्म्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥

[ श्री० भा० ४ स्क० ३१ अ० ]

एवमन्यदप्यूहनीयम् । तस्माद्भगवद्धर्म्मश्रद्धा भवति तृतीया भूमिका ।

ततो हरिगुणश्रुतिः । यथा—

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्त-
लीलातनोस्तदनुरूपविडम्बनानि ।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

[ श्री० भा० ७ स्क० ५ अ० ]

तदेवं संक्षिप्तम्—

तस्माद् भारत ! सर्वात्मा भगवानीश्वरो हरिः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम् ॥

[ श्री० भा० २ स्क० १ अ० ]

क्रमेणोदाहरणम्—

सङ्कीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं—
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥
मृषागिरस्ता ह्यसतीरसत्कथा—
न कथ्यते यद्भगवानधोऽक्षजः ।
तदेव सत्यं तदिहैव मङ्गलं—
तदेव पुण्यं भगवद्गुणोदयम् ॥
तदेव रम्यं रुचिरं नवं नवं—
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां—
यदुत्तमश्लोकयशोऽनुगीयते ॥
न तद्वचश्चित्रपदं हरेर्यशो—
जगत्पवित्रं प्रगृणीत कर्हिं चित् ।
तद् ध्वाङ्क्षतीर्थं न तु हंससेवितं—
यत्राच्युतस्तत्र हि साधवोऽमलाः ॥
स वाग्विसर्गो जनताऽघसंप्लवो—
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥

[ श्री० भा० ७ स्क० ५ अ० ]

तदेवं संक्षिप्तम्—

तस्माद् भारत ! सर्वात्मा भगवानीश्वरो हरिः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम् ॥

[ श्री० भा० २ स्क० १ अ० ]

क्रमेणोदाहरणम्—

सङ्कीर्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम् ।
प्रविश्य चित्तं विधुनोत्यशेषं—
यथा तमोऽर्कोऽभ्रमिवातिवातः ॥
मृषागिरस्ता ह्यसतीरसत्कथा—
न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदिहैव मङ्गलं—
तदेव पुण्यं भगवद्गुणोदयम् ॥
तदेव रम्यं रुचिरं नवं नवं—
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां—
यदुत्तमश्लोकयशोऽनुगीयते ॥
न तद्वचश्चित्रपदं हरेर्यशो—
जगत्पवित्रं प्रगृणीत कर्हिं चित् ।
तद् ध्वाङ्क्षतीर्थं न तु हंससेवितं—
यत्राच्युतस्तत्र हि साधवोऽमलाः ॥
स वाग्विसर्गो जनताऽघसंसवो—
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।

अहो बतैषां किमकारि शोभनं—
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥
[ श्री० भा० ५ स्क० १९ अ० ]

याः सम्पर्यचरन् प्रेम्णा पादसंवाहनादिभिः ।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥
[ वि० पु० ]

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
[ श्री० भा० ११ स्क० २७ अ० ]

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥
[ श्री० भा० ११ स्क० २७ अ० ]

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्य्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकी—
दाश्वानविक्लवमनाः कथमार्त्तिमृच्छेत् ॥
[ वि० पु० ]

अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै—
रलब्धपूर्वोपसदे सुरेर्पितः ॥
[ वि० पु० ]

तत्तेऽनुकम्पां सुसमीक्षमाणो—
भुञ्जान एवात्मकृतं विपाकम् ।

अहो बतैषां किमकारि शोभनं—
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥
[ श्री० भा० ५ स्क० १९ अ० ]

याः सम्पर्यचरन् प्रेम्णा पादसंवाहनादिभिः ।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥
[ वि० पु० ]

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
[ श्री० भा० ११ स्क० २७ अ० ]

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥
[ श्री० भा० ११ स्क० २७ अ० ]

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्य्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं—
दाश्वानविक्लवमनाः कथमार्त्तिमृच्छेत् ॥
[ वि० पु० ]

अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै—
रलब्धपूर्वोऽपसदे सुरेऽर्पितः ॥
[ वि० पु० ]

तत्तेऽनुकम्पां सुसमीक्षमाणो—
भुञ्जान एवात्मकृतं विपाकम् ।

अहो बतैषां किमकारि शोभनं—
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः॥

[ श्री० भा० ५ स्क० १९ अ० ]

याः सम्पर्यचरन् प्रेम्णा पादसंवाहनादिभिः।
जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः॥

[ वि० पु० ]

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत्॥

[ श्री० भा० ११ स्क० २७ अ० ]

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम्॥

[ श्री० भा० ११ स्क० २७ अ० ]

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्य्याम्।
अप्युत्तमां गतिमसौ भजते त्रिलोकी—
दाश्वानविक्लवमनाः कथमार्त्तिमृच्छेत्॥

[ वि० पु० ]

अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः।
यल्लोकपालैस्त्वदनुग्रहोऽमरै—
रलब्धपूर्वोपसदे सुरेर्पितः॥

[ वि० पु० ]

तत्तेऽनुकम्पां सुसमीक्षमाणो—
भुञ्जान एवात्मकृतं विपाकम्।

कर्म्मभिर्भ्राम्यमाणानां यत्र कापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥

[ श्री० भा० १० स्क० ४७ अ० ]

इयं पञ्चमी भूमिका भक्तेः स्वरूपम्, एतस्या एव परिपाकविशेषादन्याः षड् भूमिकाः फलभूताः ।

स्वरूपाधिगतिस्ततः । प्रत्यगात्मस्वरूपस्य स्थूलसूक्ष्मदेहद्वयातिरिक्तत्वेन साक्षात्कारः षष्ठी भूमिका । अन्यथा देहेन्द्रियादिविक्षेपेण जाताया अपि रतेरनिर्वाहात् । तदुक्तम्—

ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥
गुणैर्विचित्राः सृजतीं स्वरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥

[ वि० पु० ]

एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत्कृतम् ।
भवत्यकर्त्तरीशस्य साक्षिणो निर्वृतात्मनः ॥

[ श्री० भा० ३ स्क० २६ अ० ]

तथा—

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग्हेतुर्व्यापकोऽसङ्गयनावृतः ॥

कर्म्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥
[ श्री० भा० १० स्क० ४७ अ० ]

इयं पञ्चमी भूमिका भक्तेः स्वरूपम्, एतस्या एव परिपाक विशेषादन्याः षड् भूमिकाः फलभूताः ।

स्वरूपाधिगतिस्ततः । प्रत्यगात्मस्वरूपस्य स्थूलसूक्ष्मदेहद्वयातिरिक्तत्वेन साक्षात्कारः षष्ठी भूमिका । अन्यथा देहेन्द्रियादिविक्षेपेण जाताया अपि रतेरनिर्वाहात् । तदुक्तम्—

ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम् ।
यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम् ॥
अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥
स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥
गुणैर्विचित्राः सृजतीं स्वरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥
[ वि० पु० ]

एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् ।
कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥
तदस्य संसृतिर्बन्धः पारतन्त्र्यञ्च तत्कृतम् ।
भवत्यकर्त्तरीशस्य साक्षिणो निर्वृतात्मनः ॥
[ श्री० भा० ३ स्क० २६ अ० ]

तथा—

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग्हेतुर्व्यापकोऽसङ्ग्यनावृतः ॥

नदति क चिदुत्कण्ठो विलज्जो नृत्यति क चित् ।
क चित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥
क चिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥
स उत्तमश्लोकपदारविन्दयो-
र्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहु-
र्दुःसङ्गदीनस्य मनःशमं व्यधात् ॥

[ श्री० भा० ७ स्क० ४ अ० ]

तथा—

एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया संलभ्यते रतिः ॥
निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यदाऽतिहर्षोत्पुलकाश्रुगद्गदं—
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क चिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे ! जगत्पते !
नारायणेत्यात्मगतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्द्दग्धवीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोऽक्षजम् ॥
अधोऽक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ।

नदति क चिदुत्कण्ठो विलज्जो नृत्यति क चित् ।
क चित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥
क चिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥
स उत्तमश्लोकपदारविन्दयो-
निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहु
र्दुःसङ्गदीनस्य मनःशमं व्यधात् ॥

[ श्री० भा० ७ स्क० ४ अ० ]

तथा—

एवं निर्जितषड्वर्गः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया संलभ्यते रतिः ॥
निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यदाऽतिहर्षोत्पुलकाश्रुगद्गदं—
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥
यदा ग्रहग्रस्त इव क चिद्धस
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे ! जगत्पते !
नारायणेत्यात्मगतिर्गतत्रपः ॥
तदा पुमान् मुक्तसमस्तबन्धन
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोऽक्षजम् ॥
अधोऽक्षजालम्भमिहाशुभात्मनः
शरीरिणः संसृतिचक्रशातनम् ।

यज्ञेशाच्युत ! गोविन्द ! माधवानन्त ! केशव !
कृष्ण ! विष्णो ! हृषीकेशेत्याह राजा स केवलम्॥
नान्यज्जगाद मैत्रेय ! किञ्चित् स्वप्नान्तरेष्वपि।
एतत्परं तदर्थञ्च विना नान्यदचिन्तयत् ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते ।
नान्यानि चक्रे कर्म्माणि निःसङ्गो योगतापसः ॥
[ वि० पु० ]

पृथिवीपतिर्भरतः । श्रीभागवते च—
अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययाञ्च श्रियं लब्ध्वा विभवञ्चातुलं भुवि ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसंस्तुतम् ।
विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥
वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्ट्रवत्स्मृतम् ॥
स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया
यदुत्तमश्लोकजनाश्रया रतिः ॥

यज्ञेशाच्युत ! गोविन्द ! माधवानन्त ! केशव !
कृष्ण ! विष्णो ! हृषीकेशेत्याह राजा स केवलम्॥
नान्यज्जगाद मैत्रेय ! किञ्चित् स्वप्नान्तरेष्वपि।
एतत्परं तदर्थञ्च विना नान्यदचिन्तयत् ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते ।
नान्यानि चक्रे कर्म्माणि निःसङ्गो योगतापसः ॥
[ वि० पु० ]

पृथिवीपतिर्भरतः । श्रीभागवते च—
अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययाञ्च श्रियं लब्ध्वा विभवञ्चातुलं भुवि ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसंस्तुतम् ।
विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥
वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम् ॥
स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्ज्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये ॥
मुकुन्दलिङ्गालयदर्शने दृशौ
तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे
श्रीमत्तुलस्या रसनां तदर्पिते ॥
पादौ हरेः क्षेत्रपदानुसर्पणे
शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया
यदुत्तमश्लोकजनाश्रया रतिः ॥

यथा वा—

वयन्त्विह महायोगिन् ! भ्रमन्तः कर्म्मवर्त्मसु ।
त्वद्वार्त्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥
[ श्री० भा० ११ स्क० ६ अ० ]

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥
[ श्री० भा० ११ स्क० ६ अ० ]

एवमन्यदप्यूहनीयम् । भगवद्धर्म्मनिष्ठा प्रयत्नपूर्विका-साधनं, स्वतःसिद्धा तु भगवद्धर्म्मनिष्ठा भवति फलभूता नवमी भूमिका । स्वस्मिंस्तद्गुणशालिता, यथा—

अथो विभूतिं मम मायया चिता-
मैश्वर्य्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं भागवतीं वा स्पृहयन्ति भद्रां—
परस्य मे तेऽश्नुवते तु लोके ॥
[ श्री० भा० ३ स्क० २५ अ० ]

न कर्हिचिन्मत्पराः शान्तरूपे
नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
सखा गुरुः सुहृदो दैवमिष्टम् ॥
[ श्री० भा० ३ स्क० २५ अ० ]

एवमविनश्वरभगवत्तुल्यगुणाविर्भावो भवति दशमी भूमिका। प्रेम्णोऽथ परमा काष्ठा प्राणपरित्यागावधिविरहासहिष्णुतारूपा, यथा—

गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विना भवत् ॥
[ श्री० भा० १० स्क० १९ अ० ]

यथा वा—

वयन्त्विह महायोगिन् ! भ्रमन्तः कर्म्मवर्त्मसु ।
त्वद्वार्त्तया तरिष्यामस्तावकैर्दुस्तरं तमः ॥
[ श्री० भा० ११ स्क० ६ अ० ]

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेम हि ॥
[ श्री० भा० ११ स्क० ६ अ० ]

एवमन्यदप्यूहनीयम् । भगवद्धर्म्मनिष्ठा प्रयत्नपूर्विका साधनं, स्वतःसिद्धा तु भगवद्धर्म्मनिष्ठा भवति फलभूता नवमी भूमिका । स्वस्मिंस्तद्गुणशालिता, यथा—

अथो विभूतिं मम मायया चिता
मैश्वर्य्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रिय मागवतीं वा स्पृहयन्ति भद्रा—
परस्य मे तेऽश्नुवते तु लोके ॥
[ श्री० भा० ३ स्क० २५ अ० ]

न कर्हि चिन्मत्पराः शान्तरूपे
नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
सखा गुरुः सुहृदो दैवमिष्टम् ॥
[ श्री० भा० ३ स्क० २५ अ० ]

एवमविनश्वरभगवत्तुल्यगुणाविर्भावो भवति दशमी भूमिका। प्रेम्णोऽथ परमा काष्ठा प्राणपरित्यागावधिविरहासहिष्णुतारूपा, यथा—

गोपीनां परमानन्द आसीद्गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विना भवत् ॥ ।
[ श्री० भा० १० स्क० १९ अ० ]

# अथ श्रीमधुसूदनसरस्वतीविरचितभक्तिरसायनस्य

प्रेमप्रपासहितो-

भक्तिविशेषप्रतिपादको—

## द्वितीयोल्लासः ।

श्रीश्रीगौरकृष्णः शरणम् ।

सच्चित्सौख्यात्मदेहे प्रकृतिगुणकणेनाप्यसंस्पृष्टरूपे
शक्तिवैविध्ययुक्तेऽनुपधिनिजकृपामात्रतो जीवलभ्ये ॥
दाम्नाबद्धे जनन्या प्रणयरशनया गोपसीमन्तिनीभिः
कृष्णे चैतन्यदेवे निरवधिरमलप्रीतिरस्माकमास्ताम् ॥ १ ॥
यः श्रीवृन्दाविपिनवसतिं श्रीलगोपालभट्ट—
शालिग्रामात्प्रकटिततनुर्भक्तजीवातुरूपः ॥
श्रीमद्राधारमणवपुषाऽऽश्वास्य विभ्राजमानोऽ—
द्याप्यस्त्येवाखिलनतजनाभीष्टपूर्त्तिं विधातुम् ॥ २ ॥
श्रीमदानन्दतीर्थादितत्त्वारामान्तिमान् गुरून् ॥
श्रीमद्विद्यागुरूंश्च सर्वान् साञ्जलि प्रणमाम्यहम् ॥ ३ ॥
यतिकुञ्जरमधुसूदनसरस्वतीवैदुषीसिद्धे ॥
भगवद्भक्तिरसायनभक्तिरसायननिबन्धेऽस्मिन् ॥ ४ ॥
उल्लासत्रयशालिन्याद्येऽस्मिन् मूलकृट्टीका ॥
शिष्टद्वये विटीकेऽपेक्षितटीके चिकीर्ष्यते टीका ॥ ५ ॥
निजयोग्यायोग्यत्वे न कृता चिन्ता मयोत्कहृदयेन ॥
भक्तिरसायनसेवनमाश्रयितुं तापतप्तेन ॥ ६ ॥

# अथ श्रीमधुसूदनसरस्वतीविरचितभक्तिरसायनस्य

प्रेमप्रपासहितो—

भक्तिविशेषप्रतिपादको—

## द्वितीयोल्लासः ।

श्रीश्रीगौरकृष्णः शरणम् ।

सच्चित्सौख्यात्मदेहे प्रकृतिगुणकणेनाप्यसंसृष्टरूपे
शक्तित्रैविध्ययुक्तेऽनुपधिनिजकृपामात्रतो जीवलभ्ये ॥
दाम्नावद्धे जनन्या प्रणयरशनया गोपसीमन्तिनीभिः
कृष्णे चैतन्यदेवे निरवधिरमलप्रीतिरस्माकमास्ताम् ॥ १ ॥
यः श्रीवृन्दाविपिनवसतिं श्रीलगोपालभट्ट—
शालिग्रामात्मकटिलततनुर्भक्तजीवातुरूपः ॥
श्रीमद्राधारमणवपुषाऽऽश्वास्य विभ्राजमानोऽ—
द्याप्यस्त्येवाखिलनतजनाभीष्टपूर्त्तिं विधातुम् ॥ २ ॥
श्रीमदानन्दतीर्थादितत्त्वारामान्तिमान् गुरून् ॥
श्रीमद्विद्यागुरून् सर्वान् साञ्जलि प्रणमाम्यहम् ॥ ३ ॥
यतिकुञ्जरमधुसूदनसरस्वतीवैदुषीसिद्धे ॥
भगवद्भक्तिरसायनभक्तिरसायननिबन्धेऽस्मिन् ॥ ४ ॥
उल्लासत्रयशालिन्याद्येऽस्मिन् मूलकृट्टीका ॥
शिष्टद्वये विटीकेऽपेक्षितटीके चिकीर्ष्यते टीका ॥ ५ ॥
'निजयोग्यायोग्यत्वे न कृता चिन्ता मयोत्कहृदयेन ॥
भक्तिरसायनसेवनमाश्रयितुं तापतप्तेन ॥ ६ ॥

तापकाश्चित्तजतुनः······"

इत्यादिनोक्तैःकामादिभिश्चित्ते द्रुतिं नीयमाने;

"द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुने"—

इत्याद्युक्तरीत्या प्रविष्टा या भगवदाकारता स्थिरेत्यनेनोक्ताकारतायाः स्थायित्वं द्योतितं; यथा तत्रैव—

"स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते"

इत्युक्तेः, सा भक्तिरिति कथिता

"द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।

सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते"

इति प्रतिपादितदिशा; अधुना=द्वितीयोल्लासे, विशेषः=भक्तिसामान्यस्यावान्तरभेदः प्रतिपाद्यते ॥ १ ॥

प्रतिज्ञातविशेषस्य सकारणकतां दर्शयति—चित्तद्रुतेरिति।

चित्तद्रुतेः कारणानां भेदाद् भक्तिस्तु भिद्यते ॥
तान्युक्तानि तु संक्षेपाद् व्याख्यायन्तेऽधुना स्फुटम् २॥

चित्तस्य मनसो द्रुतेर्द्रवीभावस्य ग्रदिम्न इति यावत् कारणानाम्=उत्पादकानां भेदाद्=वैलक्षण्याद्, भक्तिरपि; तुरप्यर्थः, भिद्यते=पृथक्प्रकारा भवति, तानि=कारणानि संक्षेपादेव, उद्देशमात्रेणैव तुरेवार्थः, संक्षेपश्च तदीयलक्षणाद्यनुक्तिरूपः, उक्तानि=प्रथमोल्लासे कामक्रोधेत्यादिकारिकयेति शेषः, तान्येवात्रोल्लासे लक्षणनिर्वचनादिना विशदीक्रियन्त इति तुरीयचरणार्थः ॥२॥

संक्षिप्योक्तान् चित्तद्रावकान् विवरीतुं प्रथममुद्देशक्रमेण स्वरूपलक्षणभेदैः कामं विवृणोति—काम इति।

कामः शरीरसंबन्धविशेषः स्पृहयालुता ॥
संनिधानासंनिधानभेदेन स भवेद् द्विधा ॥३॥

तापकाश्चित्तजतुनः ·· ··"

इत्यादिनोक्तैः कामादिभिश्चित्ते द्रुतिं नीयमाने;

"द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुने"—

त्याद्युक्तरीत्या प्रविष्टा या भगवदाकारता स्थिरेत्यनेनोक्ताकारतायाः स्थायित्वं द्योतितं; यथा तत्रैव—

"स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते"

इत्युक्तेः, सा भक्तिरिति कथिता

"द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते"

इति प्रतिपादितदिशा; अधुना=द्वितीयोल्लासे, विशेषः=भक्तिसामान्यस्यावान्तरभेदः प्रतिपाद्यते ॥ १ ॥

प्रतिज्ञातविशेषस्य सकारणकतां दर्शयति—चित्तद्रुतेरिति ।

**चित्तद्रुतेः कारणानां भेदाद् भक्तिस्तु भिद्यते ॥
तान्युक्तानि तु संक्षेपाद् व्याख्यायन्तेऽधुना स्फुटम् २॥**

चित्तस्य मनसो द्रुतेर्द्रवीभावस्य प्रदिम्न इति यावत् कारणानाम्=उत्पादकानां भेदाद्=वैलक्षण्याद्, भक्तिरपि; तुरप्यर्थः, भिद्यते=पृथक्प्रकारा भवति, तानि=कारणानि सक्षेपादेव, उद्देशमात्रेणैव तुरेवार्थः, संक्षेपश्च तदीयलक्षणाद्यनुक्तिरूपः, उक्तानि=प्रथमोल्लासे कामक्रोधेत्यादिकारिकयेति शेषः, तान्येवात्रोल्लासे लक्षणनिर्वचनादिना विशदीक्रियन्त इति तुरीयचरणार्थः ॥२॥

सङ्क्षिप्योक्तान् चित्तद्रावकान् विवरीतुं प्रथममुद्देशक्रमेण स्वरूपलक्षणभेदैः कामं विवृणोति—काम इति ।

**कामः शरीरसंबन्धविशेषः स्पृहयालुता ॥
संनिधानासंनिधानभेदेन स भवेद् द्विधा ॥३॥**

नन्दघनात्मकतया रसत्वेनाविर्भावः प्रतिपिपादयिषितस्तथैवोक्तं च मूलकृता—

"भगवान् परमानन्दस्वरूपः स्वयमेव हि ॥

मनोगतस्तदाकाररसतामेति पुष्कलम्" इत्यादिना

तथाऽपि यावद्रसस्वरूपतयाऽऽविर्भावरूपफलोपधायकता पूर्णतमत्वप्रकाशनेन विशिष्टधर्मिणि श्रीकृष्णाख्य एवेति रहस्यमार्मिकप्रवरो मूलकारः श्रीकृष्णनामैवोद्दिष्टवान्, युक्तं चैतत् पादविभूतौ नित्यप्रकटलीलायां शान्तदास्यसख्यवात्सल्यमाधुर्यान्तमुख्यभक्तिरसनिर्यासरूपता यादृशविशिष्टप्रकारैरभिव्यञ्जिता भगवता तादृशविशिष्टप्रकारैरेवोपासकैरास्वादनीयतामर्हति सर्वथोपास्ये नापरथेति, ध्वनितश्चायमर्थो—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि—

त्यादिना, पराक्रान्तं चात्र भूरिभिर्भक्त्याचार्यैरन्यत्र भूरीति तत एवावधारणीयं नेह विस्तरभिया तत्प्रतायते ।

अत्र यद्यपि ग्रन्थान्तरेषु रसशास्त्रनिबन्धकैर्बहुभिर्व्यक्तिभजमानस्यैव रसविशेषस्य संयोगवियोगविशेषावुक्तौ; तन्मूलं चाचार्यभरतमहर्षेः "तस्य द्वे अधिष्ठाने संभोगो विप्रलम्भश्चे"ति चूर्णकं प्रतिभाति; तथाऽपि प्रकृते मूलकारः संभोगविप्रयोगाख्येत्यनेन रतिं व्यशिषदित्यत्र प्रमाणं स्विदमेव यथा शृङ्गाररसस्थायिताऽवच्छेदकतया रतित्वसामान्यसिद्धिस्तथा विप्रलम्भादिस्थायिताऽवच्छेदकतया तद्विशेषात्मकस्य रतिगतवैलक्षण्यस्यापि सिद्धिं को नाम वारयितुमीष्टे, ध्वन्यते स्म चैषा पद्धतिराचार्यभरतमहर्षिप्रणीतात् "दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिरि"त्यादिसूत्रतः, तस्मात्साधुरेव रतेरपि तादृशविशेषणीकृतिर्मूलकृत इति सर्वमनवद्यम्। एतयोरुदाहरणं क्रमेण यथा—

नन्दघनात्मकतया रसत्वेनाविर्भावः प्रतिपिपादयिषितस्तथैवोक्तं च मूलकृता—

"भगवान् परमानन्दस्वरूपः स्वयमेव हि ॥
मनोगतस्तदाकाररसतामेति पुष्कलम्" इत्यादिना

तथाऽपि यावद्रसस्वरूपतयाऽऽविर्भावरूपफलोपधायकता पूर्णतमत्वप्रकाशनेन विशिष्टधर्मिणि श्रीकृष्णाख्य एवेति रहस्यमार्मिकप्रवरो मूलकारः श्रीकृष्णनामैवोद्दिष्टवान्, युक्तं चैतत् पादविभूतौ नित्यप्रकटलीलायां शान्तदास्यसख्यवात्सल्यमाधुर्य्यान्तमुख्यभक्तिरसनिर्यासरूपता यादृशविशिष्टप्रकारैरभिव्यञ्जिता भगवता तादृशविशिष्टप्रकारैरेवोपासकैरास्वादनीयतामर्हति सर्वथोपास्ये नापरथेति, ध्वनितश्चायमर्थो—

ये यथा मां प्रपद्यन्ते ताँस्तथैव भजाम्यहमि—

त्यादिना, पराक्रान्तं चात्र सूरिभिर्भक्त्याचार्य्यैरन्यत्र भूरीति तत एवावधारणीयं नेह विस्तरभिया तत्प्रतायते।

अत्र यद्यपि ग्रन्थान्तरेषु रसशास्त्रनिबन्धकैर्बहुभिर्व्यक्तिभजमानस्यैव रसविशेषस्य संयोगवियोगविशेषावुक्तौ; तन्मूलं चाचार्यभरतमहर्षेः "तस्य द्वे अधिष्ठाने संभोगो विप्रलम्भश्चे"ति चूर्णकं प्रतिभाति; तथाऽपि प्रकृते मूलकारः संभोगविप्रयोगाख्येत्यनेन रतिं व्यशिषदित्यत्र प्रमाणं त्विदमेव यथा शृङ्गाररसस्थायिताऽवच्छेदकतया रतित्वसामान्यसिद्धिस्तथा विप्रलम्भादिस्थायिताऽवच्छेदकतया तद्विशेषात्मकस्य रतिगतवैलक्षण्यस्यापि सिद्धिं को नाम वारयितुमीष्टे, ध्वन्यते स्म चैषा पद्धतिराचार्यभरतमहर्षिप्रणीताद् "दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिरि"त्यादिसूत्रतः, तस्मात्साधुरेव रतेरपि तादृशविशेषणीकृतिर्मूलकृत इति सर्वमनवद्यम्। एतयोरुदाहरणं क्रमेण यथा—

नाशार्थकता लभ्यते, तदेवोक्तम्—"उपद्रावकनाशार्थमि"ति, कदा चिच्च चित्तप्रीतयेऽपि तद्व्याकुलत्वं पर्यवस्यति, अत उक्तं—तत्प्रीत्यर्थं चेति, उपपत्तिश्चैतदीयाऽनन्तरकारिकाविवरणे व्यक्तीभाविनी ॥ ६ ॥

पूर्वोक्तं द्वैविध्यं विशदयति—तत्रेति ।

## तत्राद्यं द्वेष एव स्याद् द्वितीयं रतिशब्दभाक् ॥
## उपरिष्टात्तदुभयं मया स्पष्टीकरिष्यते ॥ ७ ॥

तत्र=तयोरुपद्रावकनाशार्थकतया तत्प्रीत्यर्थकतया च द्विविधयोर्व्याकुलत्वयोः, प्रथमं व्याकुलत्वं द्वेष उच्यते, द्वितीयं च रतिविशेषः, या रतिर्मानाख्यविप्रलम्भतां भजते, तत्र यद्यपि रतिरेव स्थायिभावः; तथाऽपि किंचिद्विप्रियदर्शनश्रवणादिप्रयुक्तेर्ष्याकषायितत्वं विप्रलम्भविशेषताप्रयोजकतासमर्पकाभ्यामन्वयव्यतिरेकाभ्यां वैशिष्ट्यं प्रत्याय्यमानं दुरपन्हवमिति रसमार्मिका विदाङ्कुर्वन्तु, उपरिष्टाद्="ईर्ष्याजभयजौ द्वेषौ" "कामजे द्वे रती" इति वक्ष्यमाणाभ्यां कारिकाभ्याम्, उभयं=द्वेषरतिद्वयं-मया=कारिकारूपमूलकृता, स्पष्टीकरिष्यते विवरिष्यते ।

द्वेषे प्रत्युदाहरणं यथा—

इत्थं निशम्य दमघोषसुतः स्वपीठा-<br>
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।<br>
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी<br>
संश्रावयन्भगवते परुषाण्यभीतः ॥

अत्र श्रीभगवद्विषयकेर्ष्यया प्रदीप्तचेतसः शिशुपालस्य द्वेषः ।

[ श्री० भा० स्क० १० अ० ७४ ]

प्रीतिप्रयोजकेर्ष्यायामुदाहरणं यथा—

राधामञ्जुलमन्दिरादुपगतश्चन्द्रावलीमूचिवान्

नाशार्थकता लभ्यते, तदेवोक्तम्—"उपद्रावकनाशार्थमि"ति, कदा चिच्च चिरामीतयेऽपि तद्व्याकुलत्वं पर्यवस्यति, अत उक्तं—तत्प्रीत्यर्थं चेति, उपपत्तिश्चैतदीयाऽनन्तरकारिकाविवरणे व्यक्ती भाविनी ॥ ६ ॥

पूर्वोक्तं द्वैविध्यं विशदयति–तत्रेति ।

**तत्राद्यं द्वेष एव स्याद् द्वितीयं रतिशब्दभाक् ॥**
**उपरिष्टात्तदुभयं मया स्पष्टीकरिष्यते ॥ ७ ॥**

तत्र=तयोरुपद्रावकनाशार्थकतया तत्प्रीत्यर्थकतया च द्विविधयोर्व्याकुलत्वयोः, प्रथमं व्याकुलत्वं द्वेष उच्यते, द्वितीयं च रतिविशेषः, या रतिर्मानाख्यविप्रलम्भतां भजते, तत्र यद्यपि रतिरेव स्थायिभावः; तथाऽपि किंचिद्विप्रियदर्शनश्रवणादिप्रयुक्तेर्ष्याकषायितत्वं विप्रलम्भविशेषताप्रयोजकतासमर्पकाभ्यामन्वयव्यतिरेकाभ्यां वैशिष्ट्यं प्रत्याय्यमानं दुरपन्हवमिति रसमार्मिका विदाङ्कुर्वन्तु, उपरिष्टाद="ईर्ष्याजभयजौ द्वेषौ" "कामजे द्वे रती" इति वक्ष्यमाणाभ्या कारिकाभ्याम्, उभयं=द्वेषरतिद्वयं-मया=कारिकारूपमूलकृता, स्पष्टीकरिष्यते विवरिष्यते ।

द्वेषे प्रत्युदाहरणं यथा—

इत्थं निशम्य दमघोषसुतः स्वपीठा-
दुत्थाय कृष्णगुणवर्णनजातमन्युः ।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी
संश्रावयन्भगवते परुषाण्यभीतः ॥

अत्र श्रीभगवद्विषयकेर्ष्यया प्रदीप्तचेतसः शिशुपालस्य द्वेषः ।

[ श्री० भा० स्क० १० अ० ७४ ]

प्रीतिप्रयोजकेर्ष्यायामुदाहरणं यथा—

राधामञ्जुलमन्दिरादुपगतश्चन्द्रावलीमूचिवान्

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ।
सेव्यसेवकभावोऽन्यः सोऽप्युक्तस्त्रिविधो बुधैः ॥९॥

सोऽपि=सेव्यसेवकभावरूपोऽपि, त्रिविधत्वमव्यवहितोत्तरकारिकया वक्ष्यते, स्पष्टमन्यत् ॥ ९ ॥

द्वितीयप्रकारकस्नेहस्योक्तं त्रैविध्यं पद्यार्धेन विभज्य स्नेहं—विवृणोति सार्धपद्येन—भगवेति ।

भगवद्दास्यसख्याभ्यां मिश्रितं चापरं जगुः ॥
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥१०॥
पाल्यपालकभावेन सा वत्सलरतिर्भवेत् ॥
सेव्यसेवकभावेन प्रेयोरतिरितीर्यते ॥११॥

भगवन्निरूपितं दास्यं तत्संपर्कि सख्यं चेति द्वे, एनयोर्मिश्रणे चैकमित्थं त्रिधा सेव्यसेवकभावमूचुः प्राचीना रसशास्त्राचार्याः, अत्र यद्यपि मूलकृतोक्ते सेव्यसेवकभावे त्रैविध्यप्रयोजकं किमपि नासूचि तथाऽपि रसज्ञेष्वभियुक्ततमैः प्रीतिस्थायिको–दास्यरसः विश्रम्भस्थायिकः सख्यापरनामकः प्रेयान् रस इत्थं—दास्यसख्यरसद्वयी व्यवस्थापि सैवेहोपादेया परमतमप्रतिषिद्धमनुमतमिति न्यायेन समानतन्त्रसिद्धान्तरीत्या चेति प्रभुताज्ञाननिबन्धनसादरचाञ्चल्यात्मकसंभ्रमस्थायिकत्वेन, मुक्तसंभ्रमगाढविश्वासप्राणविश्रम्भस्थायिकत्वेन च दास्यसख्ययोर्भेद–इति बोध्यम् । एवं चोक्तसंभ्रमविश्रम्भप्रयुक्तद्रवशालितायां–चित्ते क्रमेण निविष्टा श्रीकृष्णाकारता संभ्रमरतिः विश्रम्भरतिश्चोच्यते, पाल्यपालकरूपे स्नेहे सति द्रुतचित्ते तदाकारता वात्सल्यरतिर्भवति, सेव्यसेवकभावेन द्रुतचित्ते तदाकारता प्रेया

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ।
सेव्यसेवकभावोऽन्यः सोऽप्युक्तस्त्रिविधो बुधैः ॥९॥

सोऽपि=सेव्यसेवकभावरूपोऽपि, त्रिविधत्वमव्यवहितोत्तरकारिकया वच्यते, स्पष्टमन्यत् ॥ ९ ॥

द्वितीयप्रकारकस्नेहस्योक्तं त्रैविध्यं पद्यार्धेन विभज्य स्नेहं—विवृणोति सार्धपद्येन—भगवेति ।

भगवद्दास्यसख्याभ्यां मिश्रितं चापरं जगुः ॥
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥१०॥
पाल्यपालकभावेन सा वत्सलरतिर्भवेत् ॥
सेव्यसेवकभावेन प्रेयोरतिरितीर्य्यते ॥११॥

भगवन्निरूपितं दास्यं तत्संपर्कि सख्यं चेति द्वे, एनयोर्मिश्रणे चैकमित्थं त्रिधा सेव्यसेवकभावमूचुः प्राचीना रसशास्त्राचार्य्याः, अत्र यद्यपि मूलकृतोक्ते सेव्यसेवकभावे त्रैविध्यप्रयोजकं किमपि नासूचि तथाऽपि रसज्ञेष्वभियुक्ततमैः प्रीतिस्थायिको—दास्यरसः विश्रम्भस्थायिकः सख्यापरनामकः प्रेयान् रस इत्थं—दास्यसख्यरसद्वयी व्यवस्थापि सैवेहोपादेया परमतमप्रतिषिद्धमनुमतमिति न्यायेन समानतन्त्रसिद्धान्तरीत्या चेति प्रभुताज्ञाननिबन्धनसादरचाञ्चल्यात्मकसंभ्रमस्थायिकत्वेन, मुक्तसंभ्रमगाढविश्वासमाणविश्रम्भस्थायिकत्वेन च दास्यसख्ययोर्भेद—इति बोध्यम् । एवं चोक्तसंभ्रमविश्रम्भमयुक्तद्रवशालितायां—चित्ते क्रमेण निविष्टा श्रीकृष्णाकारता संभ्रमरतिः विश्रम्भरतिश्चोच्यते, पाल्यपालकरूपे स्नेहे सति द्रुतचित्ते तदाकारता वात्सल्यरतिर्भवति, सेव्यसेवकभावेन द्रुतचित्ते तदाकारता प्रेया

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
यावत् क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥
एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावद् ॥
इत्यादिना ॥१३॥

[ श्री॰ भा॰ स्क॰ ५, अ॰ ५

हर्षस्य द्वितीयं प्रकारं दर्शयति—व्रीडेति ।

व्रीडाविकृतवाग्वेषचेष्टाऽऽदिजनितोऽपरः ॥
तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते ॥१४॥

लज्जया विरूपैर्वाग्वेषचेष्टाऽऽदिभिरुत्पादितो द्वितीयविधो हर्षः, चित्तस्यैतज्जन्ये द्रवे यो विकासो विस्तारः स हासः ॥१४॥

तस्यैव तृतीयं तं निरूपयति—लोकोत्तरेति ।

लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ॥
तज्जन्यायां द्रुतौ चेतो विकासो विस्मयो मतः ॥१५॥

लोकोत्तरस्य=अस्वाभाविकस्य, चमत्कारिणः=सुखविशेषजनकस्य वस्तुनो, दर्शनाद्=ज्ञानाद्, अत्र दृशिर्ज्ञानसामान्यपरः श्रवणादपि तादृशस्य तदुत्पत्तेः, जातो हर्षस्तृतीयभेदः, तेन जनितायां द्रुतौ चित्तस्य यो विकास उल्लासः स विस्मयः ॥१५॥

तदीयं तुरीयं प्रकारं कथयति—युद्धेति ।

युद्धादितापजनितो वीराणां जायतेः परः ॥
जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥१६॥

युद्धादितो यस्तापः प्रज्वलनं ततो जनितो वीराणां शूराणां हर्षः परश्चतुर्थः, वीरेषु योधिप्रतियोधिनोः कतरीयोऽयमत-

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ।
यावत् क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥
एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावद् ॥
इत्यादिना ॥१३॥

[ श्री॰भा॰ स्क॰ ५ अ॰ ५ ]

हर्षस्य द्वितीयं प्रकारं दर्शयति—व्रीडेति ।

व्रीडाविकृतवाग्वेषचेष्टाऽऽदिजनितोऽपरः ॥
तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते ॥१४॥

लज्जया विरूपैर्वाग्वेषचेष्टाऽऽदिभिरुत्पादितो द्वितीयविधो हर्षः, चित्तस्यैतज्जन्ये द्रवे यो विकासो विस्तारः स हासः ॥१४॥

तस्यैव तृतीय त निरूपयति—लोकोत्तरेति ।

लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ॥
तज्जन्यायां द्रुतौ चेतो विकासो विस्मयो मतः ॥१५॥

लोकोत्तरस्य=अस्वाभाविकस्य, चमत्कारिणः=सुखविशेष जनकस्य वस्तुनो, दर्शनाद्=ज्ञानाद्, अत्र दृशिर्ज्ञानसामान्यपर' श्रवणादपि तादृशस्य तदुत्पत्तेः, जातो हर्षस्तृतीयभेदः, तेन जनिताया द्रुतौ चित्तस्य यो विकास उल्लासः स विस्मयः ॥१५॥

तदीयं तुरीय प्रकार कथयति—युद्धेति ।

युद्धादितापजनितो वीराणां जायतेः परः ॥
जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥१६॥

युद्धादितो यस्तापः प्रज्वलन ततो जनितो वीराणां शूराणां हर्षः परश्चतुर्थः, वीरेषु योधिप्रतियोधिनोः कतरीयोऽयमत

का सा शुद्धा घृणा बाह्योपाधिसंपर्काभावाद्, एषा तु विवेकवैधुर्यप्रयुक्ता, एवं दया त्रिविधा भवति॥ १९–२० ॥

प्रसङ्गप्राप्तान् उत्साहविशेषान् लक्षयन् पूर्वं दयोत्साहं निर्दिशति—या त्विति ।

या तु शोच्यस्य रक्षाऽर्थं प्रवृत्तिरनुकम्पया ॥
तया द्रुते तु मनसि दयोत्साहः स्मृतो बुधैः ॥२१॥

शोच्यस्य=दयनीयस्य, रक्षाऽर्थं=दुःखप्रहाणार्थम् , अनुकम्पया=कृपया, या प्रवृत्तिः=चेष्टा तया मनसि द्रुते दयोत्साह उदेति ॥ २१ ॥

दानोत्साहं लक्षयति—सर्वेति ।

सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान् ॥
उद्यमो द्रुतचित्तस्य दानोत्साहः स उच्यते ॥२२॥

हे अर्थिन् ! त्वं प्रार्थय=स्वाभीष्टं वस्तु याचस्व, तुभ्यं सर्वस्वमपि दास्यामि, इत्याकारो यो महान् प्रशंसनीयः, उद्यमः=उत्साहो दातुः स दानोत्साहः कथ्यते ॥ २३ ॥

धर्मोत्साहं लक्षयति—तथेति ।

तथा स्वधर्मरक्षाऽर्थं या प्रवृत्तिः प्रयत्नतः ॥
तथा चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेद् ॥२३॥

एवं स्वधर्मस्य रक्षाऽर्थं=परिपालनाय, वास्तविकी या चेष्टा; तया द्रुते चित्ते य उत्साहो भवेत् स धर्मोत्साह उच्यते ॥२४॥

चित्तद्रावकनिर्देशिकायां कारिकायामुक्तेनादिशब्देन ग्राह्यं शमं लक्षयति—वशीति ।

वशीकाराख्यवैराग्यंयत् कामास्पृहताऽऽत्मकम् ॥
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥२४॥

का सा शुद्धा घृणा बाह्योपाधिसंपर्काभावाद्, एषा तु विवेकवै धुर्यप्रयुक्ता, एवं दया त्रिविधा भवति ॥ १९–२० ॥

प्रसङ्गप्राप्तान् उत्साहविशेषान् लक्षयन् पूर्वं दयोत्साहं निर्दिशति—या त्विति ।

या तु शोच्यस्य रक्षाऽर्थं प्रवृत्तिरनुकम्पया ॥
तया द्रुते तु मनसि दयोत्साहः स्मृतो बुधैः ॥२१॥

शोच्यस्य=दयनीयस्य, रक्षाऽर्थं=दुःखप्रहाणार्थम्, अनुकम्पया=कृपया, या प्रवृत्तिः=चेष्टा तया मनसि द्रुते दयोत्साह उदेति ॥ २१ ॥

दानोत्साहं लक्षयति—सर्वेति ।

सर्वस्वमपि दास्यामि प्रार्थयेति च यो महान् ॥
उद्यमो द्रुतचित्तस्य दानोत्साहः स उच्यते ॥२२॥

हे अर्थिन् ! त्वं प्रार्थय=स्वाभीष्टं वस्तु याचस्व, तुभ्यं सर्वस्वमपि दास्यामि, इत्याकारो यो महान् प्रशसनीयः, उद्यमः=उत्साहो दातुः स दानोत्साहः कथ्यते ॥ २२ ॥

धर्मोत्साहं लक्षयति—तथेति ।

तथा स्वधर्मरक्षाऽर्थं या प्रवृत्तिः प्रयत्नतः ॥
तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतौ भवेद् ॥२३॥

एवं स्वधर्मस्य रक्षाऽर्थं=परिपालनाय, वास्तविकी या चेष्टा, तया द्रुते चित्ते य उत्साहो भवेत् स धर्मोत्साह उच्यते ॥२४॥

चित्तद्रावकनिर्देशिकायां कारिकायामुक्तेनादिशब्देन ग्राह्यं शमं लक्षयति—वशीति ।

वशीकाराख्यवैराग्यंयत् कामास्पृहताऽऽत्मकम् ॥
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥२४॥

उक्तमेवान्वयमुखेन विशदयति—यावेति ।

**यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ॥**
**स्थायिनो, रसतां यान्ति विभावादिसमाश्रयात् ॥२६॥**

यद्यपि यावत्यो द्रुतयश्चित्ते तावन्त एव स्थायिभावा इत्यापाततः प्रतीयमानोऽप्यर्थो नासंगतस्तथाऽपि प्रातिस्विकरूपेण द्रुतिसमसंख्यकत्वे स्थायिनामानन्त्येनैषामियत्ता दुरवधारणैव स्यात्, न स्याच्च, नियमोऽपि किंजातीयस्थायिनः किंजातीयद्रुतिका इत्यत्र, अतोऽनुगमकं रूपं किंचिद्व वक्तुमुचितं, द्रावकाणां कामादीनां परम्परयाऽनुगमकत्वे तेषामपि स्वतोऽननुगतत्वेन कथमिवापरानुगमकता भवेत्तस्माद्व अनुगतैः कामतादिभिः उपाधिताऽवच्छेदकैरनुगतीकृतैः कामादिभिरुपाधिभिरुपाहिताश्चित्तीया द्रुतयोऽप्यनुगमयितव्यतामासाद्य; स्वात्मकान् स्थायिनोऽनुगमयन्तीति चित्तद्रावकताऽवच्छेदकानां कामतादीनामष्टत्वेन तदवच्छिन्नकामाद्युपाधिनिरूपितोपाधेयताऽवच्छेदकावच्छिन्नचित्तद्रुतीनामप्यष्टतया तदभिन्नाः स्थायिनोऽपि तावन्त एवेति स्वनुगमास्ते, नियमश्च तादृशस्तदीयः सुकर इत्यभिसधायैव मूलकृता "यावत्यो द्रुतय" इत्याद्युक्तमिति प्रतिभाति ।• अत्र तावन्त एव स्थायिन इत्युक्त्या ते रसत्वेनाविर्भूष्णुताशालिन इति प्रत्ययस्य यद्यपि यादृश्या द्रुत्या स्थायित्वेनाभिमतया रसाविर्भावौपयिकविभावादिसाकल्यसमवधानं कुतोऽपि प्रतिबन्धकान्नासादितं तामादायाप्रमात्वं दुर्वारमेव, न चोक्तप्रत्ययोऽप्रामाणिक-एवेति वाच्यम्, "रसावस्थः परं भावः स्थायितां प्रतिपद्यते" इति सिद्धान्ताद्व यस्य भावस्य रसावस्थाऽवश्यं भाविनी तस्यैव स्थायित्वोपगमात्; तथाऽपि रसाविर्भावस्वरूपयोग्यत्वस्योक्तस्थलीयद्रुतावपि सत्त्वेनादोषात्, तथा च रसत्वेनाविर्भावयो-

उक्तमेवान्वयमुखेन विशदयति—यावेति ।

**यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ॥**
**स्थायिनो, रसतां यान्ति विभावादिसमाश्रयात् ॥२६॥**

यद्यपि यावत्यो द्रुतयश्चित्ते तावन्त एव स्थायिभावा इत्यापाततः प्रतीयमानोऽप्यर्थो नासंगतस्तथाऽपि प्रातिस्विकरूपेण द्रुतिसमसंख्यकत्वे स्थायिनामानन्त्येनैषामियत्ता दुरवधारणैव स्यात्, न स्याच्च नियमोऽपि किंजातीयस्थायिनः किंजातीयद्रुतिका इत्यत्र, अतोऽनुगमकं रूपं किंचिद्द्वक्तुमुचितं, द्रावकाणां कामादीनां परम्परयाऽनुगमकत्वे तेषामपि स्वतोऽननुगतत्वेन कथमिवापरानुगमकता भवेत्तस्माद्द्ध अनुगतैः कामलादिभिः उपाधिताऽवच्छेदकैरनुगतीकृतैः कामादिभिरुपाधिभिरुपाहिताश्चित्तीया द्रुतयोऽप्यनुगमयितव्यतामासाद्य; स्वात्मकान् स्थायिनोऽनुगमयन्तीति चित्तद्रावकताऽवच्छेदकाना कामलादीनामष्टत्वेन तदवच्छिन्नकामाद्युपाधिनिरुपितोपाधेयताऽवच्छेदकावच्छिन्नचित्तद्रुतीनामप्यष्टतया तदभिन्नाः स्थायिनोऽपि तावन्त एवेति स्वनुगमास्ते, नियमश्च तादृशस्तदीयः सुकर इत्यभिसंधायैव मूलकृता "यावत्यो द्रुतय" इत्याद्युक्तमिति प्रतिभाति ।. अत्र तावन्त एव स्थायिन इत्युक्त्या ते रसत्वेनाविर्भूष्णुताशालिन इति प्रत्ययस्य यद्यपि यादृश्या द्रुत्या स्थायित्वेनाभिमतया रसाविर्भावौपयिकविभावादिसाकल्यसमवधानं कुतोऽपि प्रतिबन्धकान्नासादितं तामादायाप्रमात्वं दुर्वारमेव, न चोक्तप्रत्ययोऽप्रामाणिक एवेति वाच्यम्, "रसावस्थः पर भावः स्थायितां प्रतिपद्यते" इति सिद्धान्ताद्द्ध यस्य भावस्य रसावस्थाऽवश्य भाविनी तस्यैव स्थायित्वोपगमात्, तथाऽपि रसाविर्भावस्वरूपयोग्यत्वस्योक्तस्थलीयद्रुतावपि सत्त्वेनादोषात्, तथा च रसत्वेनाविर्भावयो

अत्र महाराजयुधिष्ठिरस्योत्साहो धर्मविषयकः,
दयावीरो यथा—
स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं यतस्व ।
दिनावसानोत्सुकबालवत्सा विमुच्यतां धेनुरियं महर्षेः ॥
अत्र महाराजदिलीपस्योत्साहो धेनुविषयकदयाऽनुबन्धी,
उद्वेगिन्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा—
विकीर्णहरिचन्दनद्रविणि यत्र लीलाऽलसाः
निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निविडगृध्रजालं जनै—
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥
क्षोभिण्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा—
उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा—
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का—
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

दुःखनिबन्धनाया शुद्धजुगुप्सायाः स्थायिन्या निरूपको बीभत्सो यथा—

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते ।
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥

अत्रायं विशेषः—अविवेकसमानाधिकरणायामेवास्यां घृणायां बीभत्सविशेषस्थायिता, तत्सामानाधिकरण्ये तु शान्तनिरूपिता संचारिता ज्ञेया ।

अत्र महाराजयुधिष्ठिरस्योत्साहो धर्मविषयकः,

दयावीरो यथा—

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं यतस्व ।
दिनावसानोत्सुकबालवत्सा विमुच्यतां धेनुरियं महर्षेः ॥

अत्र महाराजदिलीपस्योत्साहो धेनुविषयकदयाऽनुबन्धी,

उद्वेगिन्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा-

विकीर्णहरिचन्दनद्रविणि यत्र लीलाऽलसा
निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निविडगृध्रजालं जनै—
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥-

क्षोभिण्या जुगुप्साया स्थायिन्या निरूपको बीभत्सो यथा-

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ॥
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का—
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

दुःखनिरन्धनाया शुद्धजुगुप्सायाः स्थायिन्या निरूपको बीभत्सो यथा—

गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते ।
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥

अत्राय विशेषः—अविवेकसमानाधिकरणायामेवास्यां घृणायां बीभत्सविशेषस्थायिता, तत्सामानाधिकरण्ये तु शान्त निरूपिता सचारिता ज्ञेया ।

"ते शुद्धहृदयाः शान्तं स्वविभावविभावितम् ।
एकाग्रचेतसः सन्तोऽनुभवन्तीति युज्यते"
"रतिहासशुचः क्रोधोत्साहौ भयजुगुप्सुते ।
विस्मयश्चाथ निर्वेदः स्थायिभावा नवेत्यमी"

इत्यादिना नवरसीमभ्युपगच्छन्तो नव स्थायिनो व्यवातिष्ठिपन् ,

न च संगीतशास्त्रे तथोक्तेः मकृते किमायातमिति शङ्कनीयम्, चरमोपेयरसप्रतिपादकत्वेन समानतन्त्रसिद्धान्तनयेन तदुक्तेर्निर्विवादमादरणीयतमत्वाद्,

न चैवमपि मुनिवचनविरोधो दुष्परिहरो निर्मूलकता चेति दोषद्वयमापततीति वाच्यम्, एतदेवाशङ्क्य तत्रैव नृत्याध्याये—

"उद्दिश्य स्थायिनः प्राप्ते समये व्यभिचारिणाम् ।
अमङ्गलमपि ब्रूते पूर्वं निर्वेदमेव यत्" ॥
मुनिर्मेनेऽस्य तन्नूनं स्थायिताव्यभिचारिते ।
पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुपङ्गतः"

इति समादधिरे ते, तथा च निर्वेदस्य स्थायिनामन्ते संचारिणामादावुल्लेखान्मध्यमणिन्यायेन देहलीदीपकन्यायेन वोभयत्रैव महर्ष्यनुमतेति कल्प्यते,

न च तदीयकल्पनायामपि किं मूलमिति चोद्यम् ?
श्रीमदग्निपुराणे रसनिरूपणाध्याये—
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्याः············

इति वचनेन नवत्वं रसानां भगवच्छ्रीकृष्णद्वैपायनपादा अपि समनुमन्यन्ते स्म,

अत एव पण्डितराजा अपि रसानां नवत्वस्थापने "मुनिवचनं चात्र मानमि"ति समसूसुचन्, तत्रत्यमुनिशब्देनाग्निपुराण-

"ते शुद्धहृदयाः शान्तं स्वविभावविभावितम् ।
एकाग्रचेतसः सन्तोऽनुभवन्तीति युज्यते"
"रतिहासशुचः क्रोधोत्साहौ भयजुगुप्सते ।
विस्मयश्चाथ निर्वेदः स्थायिभावा नवेत्यमी"

इत्यादिना नवरसीमभ्युपगच्छन्तो नव स्थायिनो व्यवातिष्ठिपन्,

न च संगीतशास्त्रे तथोक्तेः प्रकृते किमायातमिति शङ्कनीयम्, चरमोपेयरसप्रतिपादकत्वेन समानतन्त्रसिद्धान्तनयेन तदुक्तेर्निर्विवादमादरणीयतमत्वाद्,

न चैवमपि मुनिवचनविरोधो दुष्परिहरो निर्मूलकता चेति दोषद्वयमापततीति वाच्यम्, एतदेवाशङ्क्य तत्रैव नृत्याध्याये—

"उद्दिश्य स्थायिनः प्राप्ते समये व्यभिचारिणाम् ।
अमङ्गलमपि ब्रूते पूर्वं निर्वेदमेव यत्" ॥
मुनिर्मेनेऽस्य तन्नूनं स्थायिताव्यभिचारिते ।
पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुषङ्गतः"

इति समादधिरे ते, तथा च निर्वेदस्य स्थायिनामन्ते संचारिणामादावुल्लेखान्मध्यमणिन्यायेन देहलीदीपकन्यायेन वोभयतैव महर्ष्यनुमतेति कल्प्यते,

न च तदीयकल्पनायामपि किं मूलमिति चोद्यम् ?
श्रीमदग्निपुराणे रसनिरूपणाध्याये—
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्याः·· ········

इति वचनेन नवत्वं रसानां भगवच्छ्रीकृष्णद्वैपायनपादा अपि समनुमन्यन्ते स्म,

अत एव पण्डितराजा अपि रसानां नवत्वस्थापने "मुनिवचनं चात्र मानमि"ति समभ्यधुचन्, तत्रत्यमुनिशब्देनाग्निपुराण-

अत्र मते जुगुप्सात्वोत्साहत्वशमत्वेषु शान्तीयस्थायिताऽवच्छेदकतायां व्यासज्यवृत्तित्वस्योपगमात् ,परन्त्वेतत्सर्वमपि प्राकृतालम्बनकतया प्राकृतरसाभिप्रायकं ज्ञातव्यम् , प्रकृते तु भक्तिरसं निरूपयितुं प्रवृत्तो मूलकारोऽप्राकृतं भजनीयं भगवन्तमालम्बमाना ये स्थायिनो रसपदवीमध्यासितुमर्हन्ति त एव भक्तिरसताभाजो भवन्तीति सिद्धान्तमनुसरन् शान्तस्यापि भक्तिरसतां पर्य्युदास्थत् ।

परमार्थतस्तु—रसतत्त्वाभिरूपतज्ज्ञा भक्तिरसेषु मधुरान्तिमान् मुख्यान् रसान् प्रतिपादयन्तः तेष्वादिमं शान्तं मुख्यभक्तिरसं प्राहुः—उपपत्तिश्चात्रेत्थम्—भक्तिरसमात्रं प्रति भगवद्विषया रतिः स्थायिभाव इति तु क्लृप्तमेव, तदुक्तं—

"स्थायी भावोऽत्र स प्रोक्तः श्रीकृष्णविषया रतिः"

इयं च रतिर्मुख्या गौणी चेति द्विधा, तत्र

"शुद्धसत्त्वविशेषात्मा रतिर्मुख्येति कीर्त्तिता"

तथा

"विभावोत्कर्षजो भावविशेषो योऽनुगृह्यते ।
संकुचन्त्या स्वयं रत्या सा गौणी रतिरुच्यते,"

एवं मुख्यां गौणीं च रतिं लक्षयित्वा;

"शुद्धा प्रीतिस्तथा सख्यं वात्सल्यं प्रियतेत्यसा"वित्यादिना मुख्यायाः पञ्चविधत्वमुपपाद्य;

"सामान्याऽसौ तथा स्वच्छा शान्तिश्चेत्यादिमा त्रिधे"त्यादिना शुद्धाया एव रतेर्विशेषः शान्तिरित्युक्तं, ततश्च

"प्रायः शमप्रधानानां ममतागन्धवर्जिता ।
परमात्मतया कृष्णे जाता शान्ती रतिर्मता"—

इत्यादिना शान्त[illegible]आ, एवं च शान्तिर-

अत्र मते जुगुप्सात्वोत्साहत्वशमत्वेषु शान्तीयस्थायिताऽवच्छेदकतायां व्यासज्यवृत्तित्वस्योपगमात् ,परन्त्वेतत्सर्वमपि प्राकृतालम्बनकतया प्राकृतरसाभिप्रायकं ज्ञातव्यम् , प्रकृते तु भक्तिरसं निरूपयितुं प्रवृत्तो मूलकारोऽप्राकृतं भजनीयं भगवन्तमालम्बमाना ये स्थायिनो रसपदवीमध्यासितुमर्हन्ति त एव भक्तिरसताभाजो भवन्तीति सिद्धान्तमनुसरन् शान्तस्यापि भक्तिरसतां पर्य्युदास्थत् ।

परमार्थतस्तु—रसतत्त्वाभिरूपतल्लजा भक्तिरसेषु मधुरान्तिमान् मुख्यान् रसान् प्रतिपादयन्तः तेष्वादिमं शान्तं मुख्यभक्तिरसं प्राहुः—उपपत्तिश्चात्रेत्थम्—भक्तिरसमात्र प्रति भगवद्विषया रतिः स्थायिभाव इति तु क्लृप्तमेव, तदुक्तं—

"स्थायी भावोऽत्र स प्रोक्तः श्रीकृष्णविषया रतिः"

इयं च रतिर्मुख्या गौणी चेति द्विधा, तत्र

"शुद्धसत्त्वविशेषात्मा रतिर्मुख्येति कीर्त्तिता"

तथा

"विभावोत्कर्षजो भावविशेषो योऽनुगृह्यते ।
संकुचन्त्या स्वयं रत्या सा गौणी रतिरुच्यते,"

एवं मुख्यां गौणीं च रतिं लक्षयित्वा;

"शुद्धा प्रीतिस्तथा सख्यं वात्सल्यं प्रियतेत्यसा"वित्यादिना मुख्यायाः पञ्चविधत्वमुपपाद्य;

"सामान्याऽसौ तथा स्वच्छा शान्तिश्चेत्यादिमा त्रिधे"-त्यादिना शुद्धाया एव रतेर्विशेषः शान्तिरित्युक्तं, ततश्च

"प्रायः शमप्रधानानां ममतागन्धवर्जिता ।
परमात्मतया कृष्णे जाता शान्ती रतिर्मता"—

इत्यादिना शान्त[illegible] शान्तिर

तिस्थायिकः शान्तो

अयं भावः—यथा जुगुप्साऽऽदयो हि चित्तद्रावकाः सन्तोऽपि भगवदनालम्बनकतया भक्तिरसत्वपदवीं प्राप्तुं नोत्सहन्ते तथोक्तद्वेषद्वयमपि भगवद्विषयकमपि चित्तद्रावकत्वाभावाद् भक्तिरसीभवितुं न क्षमते, एवं च भगवद्विषयकत्वे सति चित्तद्रावकभावत्वमेव मूलकृन्मते भक्तिरसोदयत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकमिति न काचिदनुपपत्तिरापत्तिर्वेति॥२६

उक्तद्वेषयोः सत्त्वे भक्तानास्वाद्यतां सहेतुकमाह—शुद्धइति

**शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ॥**
**नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ॥ ३०॥**

शुद्ध ईर्ष्याजनितक्रोधस्थायिको रौद्ररसः तथेर्ष्याजन्यद्वेषसंकीर्णभयस्थायिको रौद्रभयानकश्च यद्यपि परत्र रसौ भवतो भक्तिरसत्वं तु तत्र नायाति, तत्र हेतुः प्रीतिविरोधेनेति, अयं भावः—अपर्य्यनुयोज्यो हि वस्तुस्वभावः तेन यद्विषयेर्ष्या भवेन्न जातु तद्विषयिका प्रीतिरुदेति ततश्च भक्तिरसास्वादलिप्सुमतिना किंचिदपि तत्रास्वादो न प्राप्यते ॥ ३० ॥

तर्हि के भावा भगवद्विषयीभावार्हा इत्याह—कामजे इति ।

**कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ॥**
**उत्साहो यदि दाने च भगवद्विषया अमी ॥ ३१ ॥**

कामजे द्वे रती—संभोगविप्रलम्भीये, शोकप्रीतिभीविस्मया दानोत्साहश्च, एते भावा भगवद्विषया भवन्ति ॥ ३१ ॥

एतेषां रसत्वं भक्तिरसत्वं चाह—व्यामिश्रेति ।

**व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ॥**
**विभावादिसमायोगे तथा भक्तिरसा अपि ॥ ३२ ॥**

अयं भावः—यथा जुगुप्साऽऽदयो हि चित्तद्रावकाः सन्तोऽपि भगवदनालम्बनकतया भक्तिरसत्वपदवीं प्राप्तुं नोत्सहन्ते; तथोक्तद्वेषद्वयमपि भगवद्विषयकमपि चित्तद्रावकत्वाभावाद् भक्तिरसीभवितुं न क्षमते, एवं च भगवद्विषयकत्वे सति चित्तद्रावकभावत्वमेव मूलकृन्मते भक्तिरसोदयत्वावच्छिन्नजन्यतानिरूपितजनकताऽवच्छेदकमिति न काचिदनुपपत्तिरापत्तिर्वेति॥२९॥

उक्तद्वेषयोः सत्त्वे भक्तानास्वाद्यतां सहेतुकमाह—शुद्धइति।

**शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ॥**
**नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ॥ ३०॥**

शुद्ध ईर्ष्याजनितक्रोधस्थायिको रौद्ररसः तथेर्ष्याजन्यद्वेषसंकीर्णभयस्थायिको रौद्रभयानकश्च यद्यपि परत्र रसौ भवतो भक्तिरसत्वं तु तत्र नायाति, तत्र हेतुः प्रीतिविरोधेनेति, अयं भावः—अपर्य्यनुयोज्यो हि वस्तुस्वभावः तेन यद्विषयेर्ष्या भवेन्न जातु तद्विषयिका प्रीतिरुदेति ततश्च भक्तिरसास्वादलिप्सुमतिना किंचिदपि तत्रास्वादो न प्राप्यते ॥ ३० ॥

तर्हि के भावा भगवद्विषयीभावार्हा इत्याह—कामजे इति।

**कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ॥**
**उत्साहो यदि दाने च भगवद्विषया अमी ॥ ३१ ॥**

कामजे द्वे रती—संभोगविप्रलम्भीये, शोकप्रीतिभीविस्मयादानोत्साहश्च, एते भावा भगवद्विषया भवन्ति ॥ ३१ ॥

एतेषां रसत्वं भक्तिरसत्वं चाह—व्यामिश्रेति।

**व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ॥**
**विभावादिसमायोगे तथा भक्तिरसा अपि ॥ ३२ ॥**

"पूर्वानुरागमानाख्यप्रवासकरुणात्मना ।
विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः"

इत्थं तच्चतुष्टं वदन्ति, रसशास्त्राचार्याभियुक्ततज्ज्ञास्तु—पूर्वरागमानप्रवासप्रेमवैचित्त्यभेदात्तस्य चातुर्विध्यमुपगच्छन्ति, पूर्वमतविरोधस्तु नोद्भाव्यः—पूर्वरागेणाभिलापस्य, मानेनेर्ष्यायाः, प्रेमवैचित्त्यस्य विशेषेण विरहस्य, शापस्य च शप्तयोरैकाधिकरण्ये पाण्डुमाद्र्योरिव विरहेण; वैयधिकरण्ये यत्ततत्कान्तयोरिव प्रवासेनान्तर्भावं प्रतिपादयन्ति, दिङ्मात्रेणोदाह्रियते—

अकस्मादेकस्मिन् पथि सखि मया यामुनतटं—
व्रजन्त्या दृष्टो यो नवजलधरश्यामलतनुः ।
स दृग्भङ्ग्या किं वाऽकुरुत न हि जाने तत इदं—
मनो मे व्यालोलं क्व चन गृहकृत्ये न लगति ॥

अत्र पूर्वरागः ।

करुणो यथा—

तं नागभोगपरिवीतमदृष्टचेष्ट—
मालोक्य तत्प्रियसखाः पशुपा भृशार्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा—
दुःखाभिशोकभयमूढधियो निपेतुः ॥

हास्यो यथा—

यास्याम्यस्य न भीषणस्य सविधे जीर्णस्य शीर्णाकृते-
र्मातर्नेष्यति मां पिधाय कपटादाधारिकायामसौ ।
इत्युक्त्वा चकिताक्षमद्भुतशिशावुद्वीक्षमाणे हरौ
हास्यं तस्य निरुन्धतोऽप्यतितरां व्यक्तं तदाऽऽसीन्मुनेः ॥

दास्यनामा प्रीतिर्यथा—

नवाम्बुधरबन्धुरः करयुगेन वक्त्राम्बुजे
निधाय मुरलीं स्फुरत्पुरटनिन्दिपट्टाम्बरः ।

"पूर्वानुरागमानाख्यप्रवासकरुणात्मना ।
विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः"

इत्थं तच्चतुष्टं वदन्ति, रसशास्त्राचार्य्याभियुक्ततज्ज्ञास्तु—पूर्वरागमानप्रवासप्रेमवैचित्त्यभेदात्तस्य चातुर्विध्यमुपगच्छन्ति, पूर्वमतविरोधस्तु नोद्भाव्यः—पूर्वरागेणाभिलापस्य, मानेनेर्ष्यायाः, प्रेमवैचित्त्यस्य विशेषेण विरहस्य, शापस्य च शप्तयोरैकाधिकरण्ये पाण्डुमाद्रयोरिव विरहेण; वैयधिकरण्ये यत्ततत्कान्तयोरिव प्रवासेनान्तर्भावं प्रतिपादयन्ति, दिङ्मात्रेणोदाहियते—

अकस्मादेकस्मिन् पथि सखि मया यामुनतटं—
व्रजन्त्या दृष्टो यो नवजलधरश्यामलतनुः ।
स दृग्भङ्ग्या किं वाऽकुरुत न हि जाने तत इदं—
मनो मे व्यालोलं क्व चन गृहकृत्ये न लगति ॥

अत्र पूर्वरागः ।

करुणो यथा—

तं नागभोगपरिवीतमदृष्टचेष्ट—
मालोक्य तत्प्रियसखाः पशुपा भृशार्त्ताः ।
कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामा—
दुःखाभिशोकभयमूढधियो निपेतुः ॥

हास्यो यथा—

यास्याम्यस्य न भीपणस्य सविधे जीर्णस्य शीर्णाकृते-
र्मातर्नेष्यति मां पिधाय कपटादाधारिकायामसौ ।
इत्युक्त्वा चकितात्तमद्भुतशिशावुद्वीक्षमाणे हरौ
हास्यं तस्य निरन्धतोऽप्यतितरां व्यक्तं तदाऽऽसीन्मुनेः ।

दास्यनामा प्रीतिर्यथा—

नवाम्बुधरबन्धुरः करयुगेन वक्त्राम्बुजे
निधाय मुरलीं स्फुरत्पुरटनिन्दिपट्टाम्बरः ।

स्पष्टैषा कारिका ॥३४॥

उक्तरतिस्थायिकान् रसानाह—विशुद्ध इति ।

विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ॥
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ ३५ ॥

इतिशब्दो हेतौ, यतो रतिस्त्रिविधा ततो रसा अपि त्रयो भवन्ति, शुद्धरतिस्थायिको विशुद्धाख्यो, वत्सलरतिस्थायिको वत्सलाभिधः, प्रेयोरतिस्थायिकः प्रेयोनामा, त्रिविधा रसाः, ते रसा भावान्तरामिश्रितस्थायिकतयैव रसान्तरामिश्रिता अत एव परिपुष्कलाः=निसर्गपूर्णस्वभावका इत्यर्थः ।

एषामुदाहरणानि यथा—

तत्र विशुद्धभक्तिरसः—

हरिवल्लभसेवया समन्तादपवर्गानुभवं किलावधीर्य्य ।
घनसुन्दरमात्मनोऽप्यभीष्टं परमं ब्रह्म दिदृक्षते मनो मे ॥

वात्सल्यभक्तिरसः—

सुतमङ्गुलिभिः स्नुतस्तनी चिबुकाग्रे दधती दयाऽऽर्द्रधीः ।
समलालयदालयात् पुरः स्थितिभाजं व्रजराजगेहिनी ॥

प्रेयोभक्तिरसः—

श्रीदामदोर्विलसितेन कृतोऽपि कामं—
दामोदर ! त्वमिह दर्पधुरादरिद्रः ।
सद्यस्त्वया तदपि कत्थनमेव कृत्वा
देव्यै ह्रिये त्रयमदायि जलाञ्जलीनाम् ॥३५॥

वैशिष्ट्यं विवक्षुः सिंहावलोकितकेन पुनः शृङ्गारमाह—शृङ्गेति ।

शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ।
तीव्रतीव्रतरत्वं तु रतेस्तत्रैव वीक्ष्यते ॥३६॥

स्पष्टैषा कारिका ॥३४॥

उक्तरतिस्थायिकान् रसानाह—विशुद्ध इति ।

**विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ॥**
**रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ ३५ ॥**

इतिशब्दो हेतौ, यतो रतिस्त्रिविधा ततो रसा अपि त्रयो भवन्ति, शुद्धरतिस्थायिको विशुद्धाख्यो, वत्सलरतिस्थायिको वत्सलाभिधः, प्रेयोरतिस्थायिकः प्रेयोनामा, त्रिविधा रसाः, ते रसा भावान्तरामिश्रितस्थायिकतयैव रसान्तरामिश्रिता अत एव परिपुष्कलाः=निसर्गपूर्णस्वभावका इत्यर्थः ।

एषामुदाहरणानि यथा—

तत्र विशुद्धभक्तिरसः—

हरिवल्लभसेवया समन्तादपवर्गानुभवं किलावधीर्य ।
घनसुन्दरमात्मनोऽप्यभीष्टं परमं ब्रह्म दिदृक्षते मनो मे ॥

वात्सल्यभक्तिरसः—

सुतमङ्गुलिभिः स्नुतस्तनी चिबुकाग्रे दधती दयाऽऽर्द्रधीः ।
समलालयदालयात् पुरः स्थितिभाज व्रजराजगेहिनी ॥

प्रेयोभक्तिरसः—

श्रीदामदोर्विलसितेन कृतोऽपि कामं—
दामोदर ! त्वमिह दर्पधुरादरिद्रः ।
सख्यस्त्वया तदपि कत्थनमेव कृत्वा
देव्ये हिये त्रयमदायि जलाञ्जलीनाम् ॥३५॥

वैशिष्ट्य विवक्षुः सिंहावलोकितकेन पुनः शृङ्गारमाह—शृङ्गेति ।

**शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ।**
**तीव्रतीव्रतरत्वं तु रतेस्तत्रैव वीक्ष्यते ॥३६॥**

शुद्धास्त्रयः पुरैवोक्ताः संकीर्य्यन्ते न केन चित् ।
एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः ॥४०॥

तत्र क्रोधभयोत्साहजुगुप्सानिर्वेदसंयोगतः संकीर्णाः रौद्रादिशान्तान्ता उच्यन्ते, किन्त्वेतैरपि रसत्वेन सालम्बनकैर्भवितव्यमेव, तथा च भगवदालम्बनकत्वे केवलमिश्रिताः, तद्भिन्नालम्बनकत्वे संकीर्णमिश्रिताः, भावान्तरासंयुक्ततादशायामेव भगवद्विषयाः शुद्धाः, एवं प्रभेदाद्यप्रदर्शनपूर्वककथनात्मकात् संक्षेपाद्ध भक्तिरसो निरूपितः, पुनः कथ्यते प्रकारान्तरैरिति शेषः । एवं कारिकात्रयस्य वर्त्तुलार्थोऽत्र ज्ञेयः, उदाहरणानि च केवलमिश्रितानां शुद्धानां च प्रदर्शितान्येव, केवलसंकीर्णानां तु संकीर्णमिश्रितानामेवान्तर्गतानि, एषां तु प्रकृतानुपयोगितया न दर्शितानि, भगद्भिन्नविषयकत्वेन सुज्ञानानि, बहुत्र बहुभिरुक्तान्येवातो जिज्ञासुभिस्तत एव ज्ञेयानि ॥३८—३९—४०॥

तान्येव भक्तेः प्रकारान्तराणि द्वाभ्यामाह—राजसीति ।

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ॥
ईर्ष्याजद्वेपजाऽऽद्या स्याद् भयजद्वेपजा परा ॥ ४१ ॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ॥
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥ ४२ ॥

पुनर्भक्तिः चतुर्विधा—रजःप्रधाना, तमःप्रधाना, सत्त्वाभिभूतरजस्तमाः, मिश्रिता च, तत्रेर्ष्यातो जाताद्ध द्वेपाज्जाता आद्या=राजसी, भयतो जाताद्ध द्वेपाज्जाता परा=तामसी, हर्षतो जाता तृतीया, कामतः शोकतः आदिपदग्राह्येभ्यः= ईर्ष्याजनकभिन्नभयस्नेहहर्षदयाऽन्येभ्यो जाता; इतरा=मिश्रिता,

शुद्धास्त्रयः पुरैवोक्ताः संकीर्य्यन्ते न केन चित्।
एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः ॥४०॥

तत्र क्रोधभयोत्साहजुगुप्सानिर्वेदसंयोगतः संकीर्णाः रौद्रादिशान्तान्ता उच्यन्ते, किन्त्वेतैरपि रसत्वेन सालम्बनकैर्भवितव्यमेव, तथा च भगवदालम्बनकत्वे केवलमिश्रिताः, तद्भिन्नालम्बनकत्वे सकीर्णमिश्रिताः, भावान्तरासंयुक्ततादशायामेव भगवद्विषयाः शुद्धाः, एवं प्रभेदाद्यमदर्शनपूर्वककथनात्मकात् संक्षेपाद्ध भक्तिरसो निरूपितः, पुनः कथ्यते प्रकारान्तरैरिति शेषः। एवं कारिकात्रयस्य वर्त्तुलार्थोऽत्र ज्ञेयः, उदाहरणानि च केवलमिश्रितानां शुद्धाना च प्रदर्शितान्येव, केवलसंकीर्णाना तु संकीर्णमिश्रितानामेवान्तर्गतानि, एषा तु प्रकृतानुपयोगितया न दर्शितानि, भगवद्भिन्नविषयकत्वेन सुज्ञानानि, बहुत्र बहुभिरुक्तान्येवातो जिज्ञासुभिस्तत एव ज्ञेयानि ॥३८–३९–४०॥

तान्येव भक्तेः प्रकारान्तराणि द्वाभ्यामाह—राजसीति।

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ॥
ईर्ष्याजद्वेषजाऽऽद्या स्याद् भयजद्वेषजा परा ॥ ४१ ॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ॥
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥ ४२ ॥

पुनर्भक्ति' चतुर्विधा—रजःप्रधाना, तमःप्रधाना, सत्त्वाभिभूतरजस्तमाः, मिश्रिता च, तत्रेर्ष्यातो जाताद्ध द्वेषाज्जाता आद्या=राजसी, भयतो जाताद्ध द्वेषाज्जाता परा=तामसी, हर्षतो जाता तृतीया, कामतः शोकतः आदिपदग्राह्येभ्यः= ईर्ष्याजनकभिन्नभयस्नेहहर्षदयाऽन्तेभ्यो जाता; इतरा=मिश्रिता,

पूर्वोक्तचातुर्विध्याऽप्येषा भक्तिर्भगवद्विषया सती स्थिरा चेद्व दृष्टादृष्टोभयफला, दृष्टमात्रफला, अदृष्टमात्रफला, एवं त्रिधा भवेत् ॥ ४४ ॥

अविशिष्योक्तं त्रैविध्यं व्यवस्थापयितुमाह—राजसीति ।

**राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ॥**
**दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥ ४५ ॥**

पूर्वोक्तभक्तिचतुष्टये राजसीतामस्यौ भक्ती केवलमदृष्टफले, मिश्रिता च भक्तिर्दृष्टादृष्टोभयफला भवति ॥ ४५ ॥

उभयफलाया रूपान्तरं स्थलं च दर्शयन् दृष्टफलायाः पात्रमाह—शुद्धेति ।

**शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ॥**
**दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥ ४६ ॥**

दृष्टादृष्टोभयफला भक्तिः पूर्वोक्तासु शुद्धसत्त्वाऽपि भवति, सा चास्मदादिषु=साधकेषु सुखरूपदृष्टफलस्य दुरितनिवृत्त्याद्यभ्युदयनिःश्रेयसादिरूपादृष्टफलस्य चोत्पादिका, दृष्टमात्रफला तु सा सिद्धेषु—निसर्गादाप्तकामेषु सनकादिषु कुमारयोगीन्द्रमहाभागवतेषु; तेषामदृष्टफलोत्पत्तिचित्रताविरहाद्व, न च तेषामाप्तकामत्वेन दृष्टफलयोग्यताऽपि न संभवतीति वाच्यम् ? आप्तकामानामपि कर्मनिबन्धनवासनाऽधीनफलकामनाया अभावेऽपि भगवद्भक्तिरसानुबुभूषायां बाधकाभावाद्व, यथोक्तं—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥

अयं भावः—बन्धप्रयोजककामना एव हेयपक्षे निक्षिप्ता न तु बन्धविरोधिन्यः, किं चाप्तकामा न प्राकृतवस्तुभावेन मर्यादिताम्तत् कामयन्ते, परन्तु भजनीयभगवत्स्वरूप एव तादृशी

पूर्वोक्तचातुर्विध्याऽप्येषा भक्तिर्भगवद्विषया सती स्थिरा चेद्द दृष्टादृष्टोभयफला, दृष्टमात्रफला, अदृष्टमात्रफला, एव त्रिधा भवेत् ॥ ४४ ॥

अविशिष्योक्तं त्रैविध्यं व्यवस्थापयितुमाह—राजसीति ।

राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ॥
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥ ४५ ॥

पूर्वोक्तभक्तिचतुष्टये राजसीतामस्यौ भक्ती केवलमदृष्टफले, मिश्रिता च भक्तिर्दृष्टादृष्टोभयफला भवति ॥ ४५ ॥

उभयफलाया रूपान्तरं स्थलं च दर्शयन् दृष्टफलायाः पात्रमाह—शुद्धेति ।

शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ॥
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥ ४६ ॥

दृष्टादृष्टोभयफला भक्तिः पूर्वोक्तासु शुद्धसत्त्वाऽपि भवति, सा चास्मदादिषु=साधकेषु सुखरूपदृष्टफलस्य दुरितनिवृत्त्याद्यभ्युदयनिःश्रेयसादिरूपादृष्टफलस्य चोत्पादिका, दृष्टमात्रफला तु सा सिद्धेषु—निसर्गादाप्तकामेषु सनकादिषु कुमारयोगीन्द्रमहाभागवतेषु; तेषामदृष्टफलोत्पत्तिक्षेत्रताविरहाद्द, न च तेषामाप्तकामत्वेन दृष्टफलयोग्यताऽपि न सम्भवतीति वाच्यम् ? आप्तकामानामपि कर्मनिबन्धनवासनाऽधीनफलकामनाया अभावेऽपि भगवद्भक्तिरसानुबुभूषायां बाधकाभावाद्द, यथोक्तं—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥

अयं भावः—बन्धप्रयोजककामना एव हेयपक्षे निक्षिप्ता न तु बन्धविरोधिन्यः, किं चाप्तकामा न प्राकृतवस्तुभावेन मदर्चितास्तत् कामयन्ते, परन्तु भजनीयभगवत्स्वरूप एव तादृशी

दिति तात्पर्यम्, अदृष्टांशः = अदृष्टफलभागः, न तु हीयते = नैव निरुध्यते, भाविशरीरावच्छेदेन भोक्ष्यमाणकर्मफलोपभोगं प्रति प्रारब्धकर्मणामप्रतिबन्धकत्वादिति भावः, तत्र दृष्टान्तः— शीतेत्यादि, यथा शीतवातादिभिरार्त्तस्य गङ्गास्नाने जन्यमानं सुखं प्रतिरुध्यते; न तु जनिष्यमाणमामुष्मिकमभ्युदयादिकं तथेत्यर्थः ॥ ४८ ॥

अदृष्टमात्रफलविरोधः कुत्रेति दर्शयति—तथैवेति ।

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ॥
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥४९॥

यथा रजस्तमोऽभिभूतानां दृष्टांशः प्रतिवध्यते; तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते = प्रतिवध्यते, तेषां चरमदेहकतया; चरमदेहध्वंसस्य भाविभोगे प्रतिबन्धकत्वात्, अथ वा—न विद्यते= नोत्पद्यते, कर्मफलभोगत्वावच्छिन्नं प्रति कर्मजन्यशरीरस्यावच्छेदकतासंबन्धेन कारणत्वात्, अन्तिमदेहानां जीवन्मुक्तानां तु प्रारब्धकर्माधीनदेहस्यागोत्तरं भोगार्हदेहस्यैवाभावात्, यद्वा समवायेन भोगं प्रति समवायेनादृष्टस्य कारणतया; तेषामदृष्टाभावादृष्टफलाभावः, अत्र दृष्टान्तः—स्नात्वेति । स्नातभुक्तवतां गङ्गास्नानस्यावैधतयाऽपूर्वजनकत्वाभावान्नादृष्टफलप्रयोजकता, दृष्टफलं त्वस्त्येव यथा; तथा प्रकृतेऽपि, न च भोजनाद्युत्तरमपि गङ्गास्नानस्योपरागादिप्रयुक्तत्वे वैधत्वं संभवतीति वाच्यम् ? क्रीडतामिति स्नातृविशेषणस्वारस्येन चिक्रीडिषानिवन्धन एव तत्स्नानेऽदृष्टफलानुत्पादकत्वे तात्पर्य्यादिति ॥ ४९ ॥

दृष्टादृष्टे स्वयं निर्वृते—वर्तमानेति ।

वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ॥
भाविदेहो[illegible]यत्तददृष्टमुदीरितम् ॥५०॥

दिति तात्पर्यम्, अदृष्टांशः = अदृष्टफलभागः, न तु हीयते = नैव निरुध्यते, भाविशरीरावच्छेदेन भोक्ष्यमाणकर्मफलोपभोगं प्रति प्रारब्धकर्मणामप्रतिबन्धकत्वादिति भावः, तत्र दृष्टान्तः—शीतेत्यादि, यथा शीतवातादिभिरार्त्तस्य गङ्गास्नाने जन्यमानं सुखं प्रतिरुध्यते; न तु जनिष्यमाणमामुष्मिकमभ्युदयादिकं तथेत्यर्थः ॥ ४८ ॥

अदृष्टमात्रफलविरोधः कुत्रेति दर्शयति—तथैवेति ।

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ॥
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥४९॥

यथा रजस्तमोऽभिभूतानां दृष्टांशः प्रतिवध्यते; तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते = प्रतिवध्यते, तेषां चरमदेहकतया; चरमदेहध्वंसस्य भाविभोगे प्रतिबन्धकत्वात्, अथ वा—न विद्यते= नोत्पद्यते, कर्मफलभोगत्वावच्छिन्नं प्रति कर्मजन्यशरीरस्यावच्छेदकतासंबन्धेन कारणत्वात्, अन्तिमदेहानां जीवन्मुक्तानां तु प्रारब्धकर्माधीनदेहत्यागोत्तरं भोगार्हदेहस्यैवाभावात्, यद्वा समवायेन भोगं प्रति समवायेनादृष्टस्य कारणतया; तेषामदृष्टाभावाददृष्टफलाभावः, अत्र दृष्टान्तः—स्नात्वेति । स्नातभुक्तवतां गङ्गास्नानस्यावैधतयाऽपूर्वजनकत्वाभावान्नादृष्टफलप्रयोजकता, दृष्टफलं त्वस्त्येव यथा; तथा प्रकृतेऽपि, न च भोजनाद्युत्तरमपि गङ्गास्नानस्योपरागादिप्रयुक्तत्वे वैधत्वं संभवतीति वाच्यम् ? क्रीडतामिति स्नातृविशेषणस्वारस्येन चिक्रीडिषानिबन्धन एव तत्स्नानेऽदृष्टफलानुत्पादकत्वे तात्पर्यादिति ॥ ४९ ॥

दृष्टादृष्टे स्वयं निर्वृते—वर्तमानेति ।

वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ॥
भाविदेहो[illegible]दीरितम् ॥५०॥

जातेन द्वेषेण मिश्रिता मनोवृत्तिरपि सुखावहा न भवति यथा कंसस्य—

आसीनः संविशँस्तिष्ठन् भुञ्जानः पर्यटन्महीम् ॥
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥
कंसो; हरेवरानुबन्धकृदिति चानुस्मृते ॥ ५४ ॥

एवं रजस्तमोऽभिभूतसत्त्वस्थले रतेर्दृष्टफलाभावं प्रदर्श्या-दृष्टफलं दर्शयति—तयोरिति ।

**तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।**
**सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥५५॥**

तयोः=चैद्यकंसयोः, भाविशरीरे=भगवद्धस्ततो निधन-सौभाग्यलाभोत्तरलब्धदिव्यदेहे, सति तु प्रतिबन्धक्षये=शापा-दिप्रयुक्तनियतकालादिकैहिकभोगोपयोगिदेहावसाने, सैव= अतिपूर्वं लब्धा, चित्तद्रुतिः=भगवदाकारताऽऽत्मा, स्पष्टमन्यद्, अत्र प्रमाणं तु—"भूयो ममान्तिकमितां तदनुग्रहो मे" इत्या-दि "ददर्श चक्रायुधमग्रतो यस्तदेव रूपं दुरवापमाप" इत्यादि च श्रीमद्भागवतादिवचनानि द्रष्टव्यानीति ॥ ५५ ॥

प्रतिबद्धदृष्टफलकभक्तिकाः पूर्वं चैद्यादय एवासन्नैवं बोध्यं, किन्त्विदानीमपि तादृशा वर्त्तन्त इत्याह—अधुनेति ।

**अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः ।**
**तेषामप्येवमेव स्यादथ वाऽनेन तुल्यता ॥५६॥**

अधुनाऽपि=वर्त्तमानसमयेऽपि, ये भगवति द्वेषवन्तः स्वस्वा-भीष्टं भजन्ते, पाशुपतपदं भगवत्प्रातिकूल्यमाचरतामखिला-नामुपलक्षणम्, आदिशब्दः सदृशपरः, तेषामपि=भगवद्विद्वे-षिणामपि, एवमेव=भगवत्कृपया प्रतिबन्धनिरासे देहान्तर-[illegible] भक्तिरसानुभ[illegible] [illegible]गवतजनकृपातो वा यथा

जातेन द्वेषेण मिश्रिता मनोवृत्तिरपि सुखावहा न भवति यथा कंसस्य—

आसीनः संविशँस्तिष्ठन् भुञ्जानः पर्यटन्महीम् ॥
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥
कंसो; हरेवरानुगन्यच्छदिति चानुस्मृते ॥ ५४ ॥

एवं रजस्तमोऽभिभूतसत्त्वस्थले रतेर्दृष्टफलाभावं प्रदर्श्या दृष्टफलं दर्शयति—तयोरिति ।

तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥५५॥

तयोः=चैद्यकंसयोः, भाविशरीरे=भगवद्धस्ततो निधनसौभाग्यलाभोत्तरलब्धदिव्यदेहे, सति तु प्रतिबन्धक्षये=शापादिप्रयुक्तनियतकालादिकैहिकभोगोपयोगिदेहावसाने, सैव=अतिपूर्वं लब्धा, चित्तद्रुतिः=भगवदाकारताऽऽत्मा, स्पष्टमन्यद्, अत्र प्रमाणं तु—"भूयो ममान्तिकमितां तदनुग्रहो मे" इत्यादि "ददर्श चक्रायुधमग्रतो यस्तदेव रूपं दुरवापमाप" इत्यादि च श्रीमद्भागवतादिवचनानि द्रष्टव्यानीति ॥ ५५ ॥

प्रतिबद्धदृष्टफलकभक्तिकाः पूर्वं चैद्यादय एवासन्नैवं बोध्यं, किन्त्विदानीमपि तादृशा वर्त्तन्त इत्याह—अधुनेति ।

अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः ।
तेषामप्येवमेव स्यादथ वाऽनेन तुल्यता ॥५६॥

अधुनाऽपि=वर्त्तमानसमयेऽपि, ये भगवति द्वेषवन्तः स्वस्वाभीष्टं भजन्ते, पाशुपतपदं भगवत्प्रातिकूल्यमाचरतामखिलानामुपलक्षणम्, आदिशब्दः सदृशपरः, तेषामपि=भगवद्विद्वेषिणामपि, एवमेव=भगवत्कृपया प्रतिबन्धनिरासे देहान्तर प्र भक्तिरसानुभ[illegible] गवतजनकृपातो वा यथा

एवपदेन भावान्तरासंसृष्टस्य यो विकारः=परिणामः, प्रिययोः= स्निग्धयोः–स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रयतानिरूपकत्वे- तदन्यतरसंबन्धेन वस्तुविशिष्टेन स्नेहेनालम्बनताऽऽश्रयताऽन्यत- रसंबन्धेन विशिष्टयोरिति यावद्; इत्थमनुक्तौ यत्किंचिद्विषयक स्नेहाश्रययोरन्योन्यमुदासीनयोर्ग्रहणेऽतिप्रसङ्गः स्यात्; तत्समवे- ताद्द अनिशम्=धारावाहित्वेन, अत्यन्ताद्=भावनीयेतरानवगा- हिनो, भावनात्=सोत्कण्ठचिन्तनाद्द विरहस्य=अभीष्टविष- यकमत्यक्षाभावज्ञानस्य, यद्यपि परत्र विरहशब्देनाभावो बुध्यते; किन्तु प्रकृते विशिष्टाभावज्ञानं विवक्ष्यते, ज्ञानानुक्तौ यत्र प्रेम वैचित्र्यादौ तादृशप्रत्यक्षसत्त्वेऽप्यभावबुद्धौ विरहोद्गारोऽनुभ- वसिद्धस्तत्रानुपपत्तेः, याऽसहिष्णुता=परिहार्य्यत्वप्रकारकदुः- खविषयकज्ञानाभावः, तथा च तादृशदुःखकारणे व्यवह्रियमाणे सह्यासह्यत्वे भाक्ते, तदात्मा=तत्प्रवृत्तिनिमित्तकः प्रीतिविशेषो रतिः, एवं च–वस्तुविशिष्टस्नेहविशिष्टव्यक्तिसमवेतविषयान्त रानवगाहिधारावाहिसोत्कण्ठचिन्तनप्रयुक्तोऽभीष्टविषयकप्रत्यक्षा- भावप्रयोज्यपरिहार्य्यत्वप्रकारकदुःखविषयकज्ञानाभावविशिष्टः भावान्तरासंसृष्टस्नेहपरिणामप्रीतिविशेषो रतिरिति फलितम्,

स्नेहे वैशिष्ट्यं च–स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रय- तानिरूपकत्वैतदन्यतरसंबन्धेन, व्यक्तौ वैशिष्ट्यं च–आलम्बनता- ऽऽश्रयताऽन्यतरसंबन्धेन, प्रीतिविशेषे तादृशाभाववैशिष्ट्यं च स्वा- श्रयसमवेतत्वस्वप्रतियोगिज्ञानविषयदुःखप्रयोजकाभावप्रतियोगि- प्रत्यक्षविषयाभीष्टविषयकत्वैतदुभयसंबन्धेनेति निष्कर्षः ॥५९॥

रजस्तमोऽपसरणानुसारेण रतेस्तारतम्यमाह—रजेति ।

**रजस्तमःसमुच्छेदतारतम्येन गम्यते ।**
**तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥६०॥**

एवपदेन भावान्तरासंसृष्टस्य यो विकारः=परिणामः, प्रिययोः=स्निग्धयोः—स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रयतानिरूपकत्वे तदन्यतरसंबन्धेन वस्तुविशिष्टेन स्नेहेनालम्बनताऽऽश्रयताऽन्यतरसंबन्धेन विशिष्टयोरिति यावद्; इत्थमनुक्तौ यत्किंचिद्विषयकस्नेहाश्रययोरन्योन्यमुदासीनयोर्ग्रहणेऽतिप्रसङ्गः स्यात्; तत्समवं ताद्द अनिशम्=धारावाहित्वेन, अत्यन्ताद्=भावनीयेतरानवगाहिनो, भावनात्=सोत्कण्ठचिन्तनाद् विरहस्य=अभीष्टविषयकप्रत्यक्षाभावज्ञानस्य, यद्यपि परत्र विरहशब्देनाभावो बुध्यते, किन्तु प्रकृते विशिष्टाभावज्ञानं विवक्ष्यते, ज्ञानानुक्तौ यत्र प्रेमवैचित्र्यादौ तादृशप्रत्यक्षसत्त्वेऽप्यभावबुद्धौ विरहोद्गारोऽनुभवसिद्धस्तत्रानुपपत्तेः, याऽसहिष्णुता=परिहार्य्यत्वप्रकारकदुःखविषयकज्ञानाभावः, तथा च तादृशदुःखकारणे व्यवह्रियमाणे सह्यासह्यत्वे भाक्ते, तदात्मा=तत्प्रवृत्तिनिमित्तकः प्रीतिविशेषो रतिः, एवं च—वस्तुविशिष्टस्नेहविशिष्टव्यक्तिसमवेतविषयान्तरानवगाहिधारावाहिसोत्कण्ठचिन्तनप्रयुक्तोऽभीष्टविषयकप्रत्यक्षाभावप्रयोज्यपरिहार्य्यत्वप्रकारकदुःखविषयकज्ञानाभावविशिष्टः भावान्तरासंसृष्टस्नेहपरिणामप्रीतिविशेषो रतिरिति फलितम्,

स्नेहे वैशिष्ट्यं च—स्ववृत्त्यालम्बनतानिरूपकत्वस्ववृत्त्याश्रयतानिरूपकत्वैतदन्यतरसंबन्धेन, व्यक्तौ वैशिष्ट्यं च—आलम्बनताऽऽश्रयताऽन्यतरसंबन्धेन, प्रीतिविशेषे तादृशाभाववैशिष्ट्य च स्वाश्रयसमवेतत्वस्वप्रतियोगिज्ञानविषयदुःखप्रयोजकाभावप्रतियोगिप्रत्यक्षविषयाभीष्टविषयकत्वैतदुभयसंबन्धेनेति निष्कर्षः ॥५६॥

रजस्तमोऽपसरणानुसारेण रतेस्तारतम्यमाह —रजेति ।

रजस्तमःसमुच्छेदतारतम्येन गम्यते ।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥६०॥

इत्युक्तलक्षणात्तस्माज्जाता, औपम्यजा—औपम्यम्=उपमा·
"यथा कथं चिदप्यस्य सादृश्यमुपमोदिता"
इत्युक्तलक्षणादौपम्याज्जाता, अध्यात्मजा—एतस्या एव नामान्तरं स्वरूपजा, तदुक्तं—
"अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव उच्यते"
अस्माज्जाताऽध्यात्मजा, अभियोगजा—
"अभियोगो भवेद्ध भावव्यक्तिः"
इत्युक्ताभियोगजा, संप्रयोगजा—
"संभोगे जायते या तु रतिः सा संप्रयोगजा"
इत्युलक्षणासंप्रयोगजा, अभिमानजा—
"सन्ति भूरीणि रम्याणि प्राथ्र्यं स्यादिदमेव मे।
इति यो निर्णयो धीरैरभिमानः स उच्यते"
इत्युक्तरूपादभिमानाज्जाता, समारोपजा—इयं वैषयिकीनाम्नाऽपि व्यवह्रियते—तत्र
"शब्दस्पर्शादयः पञ्च विषयाः किल विश्रुताः"
इति प्रसिद्धेभ्यो विषयेभ्यो जाता। आसामुदाहरणानि—
तत्र निसर्गजायाः—

अत्सुन्दरः सुन्दरशेखरो वा गुणैर्विहीनो गुणिनां वरो वा।
द्वेषी मयि स्यात्करुणाऽम्बुधिर्वा कृष्णः स एवाद्य गतिर्ममायम् ॥

संबन्धजायाः—

वीर्यं कन्दुकिताद्रिरूपमखिलक्ष्मामण्डले मण्डनं—
जन्माभीरपुरन्दरस्य भवने पारेपरार्धं गुणाः।
लीला काऽपि जगच्चमत्कृतिकरीत्येतस्य लोकोत्तरा
वृत्तिर्वेणुधरस्य दुर्मुखि ! धृतिं कस्याः क्षणं रक्षति ॥

इत्युक्तलक्षणात्तस्माज्जाता, औपम्यजा—औपम्यम्=उपमा

"यथा कथं चिदप्यस्य सादृश्यमुपमोदिता"

इत्युक्तलक्षणादौपम्याज्जाता, अध्यात्मजा—एतस्या एव नामान्तरं स्वरूपजा, तदुक्तं—

"अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव उच्यते"

अस्माज्जाताऽध्यात्मजा, अभियोगजा—

"अभियोगो भवेद्ध भावव्यक्तिः"

इत्युक्ताभियोगजा, संप्रयोगजा—

"संभोगे जायते या तु रतिः सा संप्रयोगजा"

इत्युलक्षणसंप्रयोगजा, अभिमानजा—

"सन्ति भूरीणि रम्याणि प्रार्थ्यं स्यादिदमेव मे।
इति यो निर्णयो धीरैरभिमानः स उच्यते"

इत्युक्तरूपादभिमानाज्जाता, समारोपजा—इयं वैषयिकीनाम्नाऽपि व्यवह्रियते—तत्र

"शब्दस्पर्शादयः पञ्च विषयाः किल विश्रुताः"

इति प्रसिद्धेभ्यो विषयेभ्यो जाता। आसामुदाहरणानि—

तत्र निसर्गजायाः—

असुन्दरः सुन्दरशेखरो वा गुणैर्विहीनो गुणिनां वरो वा।
द्वेषी मयि स्यात्करुणाऽम्बुधिर्वा कृष्णः स एवाद्य गतिर्ममायम् ॥

संबन्धजायाः—

वीर्यं कन्दुकिताद्रिरूपमखिलक्ष्मामण्डले मण्डनं—
जन्माभीरपुरन्दरस्य भवने पारेपरार्धं गुणाः।
लीला काऽपि जगच्चमत्कृतिकरीत्येतस्य लोकोत्तरा
वृत्तिर्वेणुधरस्य दुर्मुखि ! धृतिं कस्याः क्षणं रक्षति ॥

स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले ।
समुचिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥६४॥

केवलात् स्पर्शादितः; समुदितात्तत्पञ्चकाच, तत्र=समारोपे, सा = मृदुतीव्रत्वादिभेदा, एकैका=प्रत्येकमपि, षोढा ज्ञेया ॥

अस्याः क्रमादुदाहरणानि--

स्पर्शजायाः—

व्रजं मुष्टिग्राह्ये तमसि निगिरत्यङ्गमिह मे
सखि ! स्पर्शं दैवाद्यदवधि परं कस्य चिदगात् ॥
गृहीता जागर्या तदवधि सहैवाङ्गजगणैः
सशङ्कैर्या पश्य क्षणमपि न साऽद्याप्युपरता ॥

शब्दजायाः—

एकस्य द्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरं—
सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः ॥
एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणा—
त्कष्टं धिक् पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥

रूपजायाः—

कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद्द दृष्ट्वा दूरादहितहितवोधोज्झितमतिः ।
हताशेयं प्रेमानलमनुविशन्ती सरभसं—
पतङ्गीवात्मानं मुरहर ! मुहुर्दाहितवती ॥

रसजायाः—

पुलकयति यदङ्गं सेवते गात्रभङ्गं—
वहति हृदि तरङ्गं सद्य एवाद्य मुग्धा ।
तदघदमनवक्त्रोद्गीर्णताम्बूलमल्पं—
स्फुटमविदितमास्ये न्यस्तमस्यास्त्वयाऽऽलि ! ॥

**स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले ।**
**समुचिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥६४॥**

केवलात् स्पर्शादितः; समुदितात्तत्पञ्चकाच, तत्र=समारोपे, सा = मृदुतीव्रत्वादिभेदा, एकैका=प्रत्येकमपि, षोढा ज्ञेया ॥

अस्याः क्रमादुदाहरणानि--

स्पर्शजायाः—

व्रजं मुष्टिग्राह्ये तमसि निगिरत्यङ्गमिह मे
सखि ! स्पर्शो दैवाद्यदवधि पर कस्य चिदगात् ॥
गृहीता जागर्या तदवधि सहैवाङ्गजगणैः
सशङ्कैर्या पश्य क्षणमपि न साऽद्याप्युपरता ॥

शब्दजायाः—

एकस्य द्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरं—
सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः ॥
एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणा—
त्कष्टं धिक् पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥

रूपजायाः—

कृताकृष्टिक्रीडं किमपि तव रूपं मम सखी
सकृद् दृष्ट्वा दूरादहितहितबोधोज्झितमतिः ।
हताशेयं प्रेमानलमनुविशन्ती सरभसं—
पतङ्गीवात्मानं मुरहर ! मुहुर्दाहितवती ॥

रसजायाः—

पुलकयति यदङ्गं सेवते गात्रभङ्गं—
वहति हृदि तरङ्गं सद्य एवाद्य मुग्धा ।
तदयदमनवक्त्रोद्गीर्णताम्बूलमल्पं—
स्फुटमविदितमास्ये न्यस्तमस्यास्त्वयाऽऽलि ! ॥

सोपाधिं दर्शयन्निरुपाधिं विवृणोति—कामेति ।

कामसंबन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥
विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ॥ ६७ ॥

पूर्वार्धं स्पष्टमेव, यदा च भक्तिरसस्य विभावादयः समुदीयुः किन्तु भक्तिरसस्थायिनी रतिराश्रयगतभावान्तरेण न संकीर्येत तदा शुद्धा भक्तिर्भवेत् ॥ ६७ ॥

निरुपाधिं विवृणोति कारिकाद्वयेन—शृङ्गेत्यादिना ।

शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ॥
संबन्धजा रतिर्याति पूर्वोक्तां रसतां द्वयोः ॥ ६८ ॥
एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथाऽपरा ॥
भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥ ६९ ॥

अत्र कामजा रतिः पूर्वं दर्शिता, संबन्धजाऽपि सा द्वयोः—वात्सल्यसख्ययोरसयोः, रसतां यातीत्यपि दर्शितम्, प्रेयोभक्तिरसः=सख्यम्, भयकारणजन्यचेतोद्रुत्यात्मा रतिः प्रीतिभयानकाख्यमिश्रितरसस्य स्थायिनी भवतीति भावः॥ ६८, ६९ ॥

तन्मिश्रणे सति वैलक्षण्यमाह—एकेति ।

एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ॥
तदा तु पानकरसन्यायेन परमो रसः ॥ ७० ॥

यदि तु कारणसामग्रीसमवधानाद् एकदा कामसंबन्धद्वयभयजानां रतीनां चतुष्टयमेकाश्रय एवोदीयात् तदा तु पानके=समुचितैलामरिचसंयुक्तसितामधुरतमीकृतपानीयविशेषे, रसस्य=रसनाग्राह्यगुणविशेषस्य न्यायेन विलक्षणो रसोऽनुभूयते, तत्र यथा चित्ररसोऽपि तथा चित्ररसोऽनुभवसिद्धो दुरपह्नव—इति हार्दो भावः ॥ ७० ॥

सोपाधिं दर्शयन्निरुपाधिं विवृणोति—कामेति ।

**कामसंबन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥**
**विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ॥ ६७ ॥**

पूर्वार्धं स्पष्टमेव, यदा च भक्तिरसस्य विभावादयः समुदीयुः किन्तु भक्तिरसस्थायिनी रतिराश्रयगतभावान्तरेण न संकीर्येत तदा शुद्धा भक्तिर्भवेत् ॥ ६७ ॥

निरुपाधिं विवृणोति कारिकाद्वयेन—शृङ्गेत्यादिना ।

**शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ॥**
**संबन्धजा रतिर्याति पूर्वोक्तां रसतां द्वयोः ॥ ६८ ॥**
**एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथाऽपरा ॥**
**भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥ ६९ ॥**

अत्र कामजा रतिः पूर्वं दर्शिता, संबन्धजाऽपि सा द्वयोः—वात्सल्यसख्ययोरसयोः, रसतां यातीत्यपि दर्शितम्, प्रेयोभक्तिरसः=सख्यम्, भयकारणजन्यचेतोद्रुत्यात्मा रतिः प्रीतिभयानकाख्यमिश्रितरसस्य स्थायिनी भवतीति भावः॥ ६८, ६९ ॥

तन्मिश्रणे सति वैलक्षण्यमाह—एकेति ।

**एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ॥**
**तदा तु पानकरसन्यायेन परमो रसः ॥ ७० ॥**

यदि तु कारणसामग्रीसमवधानाद् एकदा कामसंबन्धद्वयभयजानां रतीनां चतुष्टयमेकाश्रय एवोदीयात् तदा तु पानके=सम्मिलितैलामरिचसंयुक्तसितामधुरतमीकृतपानीयविशेषे, रसस्य=रसनाग्राह्यगुणविशेषस्य न्यायेन विलक्षणो रसोऽनुभूयते, तत्र यथा चित्ररसोऽत्रापि तथा चित्ररसोऽनुभवसिद्धो दुरपन्हव—इति हार्दो भावः ॥ ७० ॥

सिषाधयिषुणा तासां चित्तमालम्ब्य कृते साधने तादृशचित्ततामाप्तिस्वरूपयोग्यता शक्यसंपादना, न चैतदप्रमाणकमिति भ्रमितव्यम् ! पातञ्जलदर्शने हि वीतरागचित्तालम्बिनस्तादृशचित्तता सिद्धान्तिता, तुल्ययुक्त्या भगवद्रतिरञ्जितचित्तालम्बनेन तादृशचित्तताऽपि निर्विवादा, ध्वनितश्चायमर्थो "वीतरागविषयं वा चित्तम्" अस्मिन् प्रकरणे तत्रेति ॥ ७२ ॥

अधुना गौणरतितो रसस्थितिमाह—रसेति ।

**रसान्तरविभावादिसंकीर्णा भगवद्रतिः ॥**
**चित्ररूपवदन्याद्दग्रसतां प्रतिपद्यते ॥ ७३ ॥**

हास्यादिविभावादिसमवधाने भगवद्रतिः चित्ररसतां भजति, नानावर्णकसूत्रारब्धचित्रपटवदिति भावः ॥७३॥

अन्यविभावादिराहित्ये कीदृशो रसस्तमाह—रसान्तरेति ।

**रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ॥**
**दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७४ ॥**

अत्र भगवद्रतिरित्यनुवर्त्तते, तथा च रसान्तरविभावादिराहित्ये तु भगवद्रतिः स्वरूपभाक्=भगवत्स्वरूपभाक् सती सनकादीनां रतिरिवाधिकामत एव दशमीं रसतां भजते, अत्र प्राकृतरसेषु व्यवह्रियमाणं नवत्वमपेक्ष्यैवाधिकत्वं दशमत्वं ज्ञेयं,— न च शान्तेऽन्तर्भावात्कथमधिकत्वमिति शङ्क्यम् ! शान्तस्य निर्वेदस्थायिकताया एवान्यत्र प्रसिद्धत्वाद्द, यदि तु मुख्यरसेषु शुद्धरतिस्थायिकः शान्तो गृह्येत, तदा दशमत्वोक्तिरसंगता स्यात्, भक्तकारिकायां विभावशब्देनोद्दीपनं ग्राह्यं, भगवत=आलम्बनस्य सर्वत्राद्वितीयतयाऽनुस्यूतत्वात्, तद्राहित्ये हि निरालम्बना रतिरेव न स्याद्द दूरे रसताचर्चेति विवेचनीयम् ॥ ७४ ॥

सिपाधयिपुणा तासां चित्तमालम्ब्य कृते साधने तादृशचित्ततामाप्तिस्वरूपयोग्यता शक्यसंपादना, न चैतदप्रमाणकमिति भ्रमितव्यम् ? पातञ्जलदर्शने हि वीतरागचित्तालम्बिनस्तादृशचित्तता सिद्धान्तिता, तुल्ययुक्त्या भगवद्रतिरञ्जितचित्तालम्बनेन तादृशचित्ततापि निर्विवादा, ध्वनितश्चायमर्थो "वीतरागविषयं वा चित्तम्" अस्मिन् प्रकरणे तत्रेति ॥ ७२ ॥

अधुना गौणरतितो रसस्थितिमाह—रसेति ।

**रसान्तरविभावादिसंकीर्णा भगवद्रतिः ॥**
**चित्ररूपवदन्याद्वग्रसतां प्रतिपद्यते ॥ ७३ ॥**

हास्यादिविभावादिसमवधाने भगवद्रतिः चित्ररसतां भजति, नानावर्णकसूत्रारब्धचित्रपटवदिति भावः ॥७३॥

अन्यविभावादिराहित्ये कीदृशो रसस्तमाह—रसान्तरेति ।

**रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ॥**
**दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७४ ॥**

अत्र भगवद्रतिरित्यनुवर्त्तते, तथा च रसान्तरविभावादिराहित्ये तु भगवद्रतिः स्वरूपभाक्=भगवत्स्वरूपभाक् सती सनकादीनां रतिरिवाधिकामत एव दशमीं रसतां भजते, अत्र प्राकृतरसेषु व्यवह्रियमाणं नवत्वमपेक्ष्यैवाधिकत्वं दशमत्वं ज्ञेयं,—न च शान्तेऽन्तर्भावात्कथमधिकत्वमिति शङ्क्यम् ? शान्तस्य निर्वेदस्थायिकताया एवान्यत्र प्रसिद्धत्वाद्, यदि तु मुख्यरसेषु शुद्धरतिस्थायिकः शान्तो गृह्येत, तदा दशमत्वोक्तिरसंगता स्यात्, प्रकृतकारिकायां विभावशब्देनोद्दीपनं ग्राह्यं, भगवत=आलम्बनस्य सर्वत्राद्वितीयतयाऽनुस्यूतत्वात्, तद्राहित्ये हि निरालम्बना रतिरेव न स्याद् दूरे रसताचर्चेति विवेचनीयम् ॥ ७४ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः ।

ये साक्षात् सुखप्रतिकूलाः क्रोधादयः, तेषां रसत्वं विभावादिव्यापारसाधारणीकरणानुभवगृहीततयाऽभ्युपगतं यदि, तर्हि भगवतीनां श्रुतीनाम् "एतस्यैवानन्दस्यान्य आनन्दा मात्रामुपजीवन्ती"त्येवंजातीययथार्थानुभवसहस्रसिद्धे साम्यातिशयरहितपरिपूर्णानन्दरूपे भगवति रते रसता सहसाऽङ्गेनेव कुतो निवार्यते रसज्ञंमन्येन त्वया, तस्मादुक्तनिवारणमप्रामाणिकमिति भावः ॥ ७६—८० ॥

इति श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रि विरचितायां भक्तिरसायनव्याख्यायां प्रेमप्रपायां भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः



इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः ।

ये साक्षात् सुखप्रतिकूलाः क्रोधादयः, तेषां रसत्वं विभावादिव्यापारसाधारणीकरणानुभवगृहीततयाऽभ्युपगतं यदि, तर्हि भगवतीनां श्रुतीनाम् "एतस्यैवानन्दस्यान्य आनन्दा मात्रामुपजीवन्ती"त्येवंजातीययथार्थानुभवसहस्रसिद्धे साम्यातिशयरहितपरिपूर्णानन्दरूपे भगवति रते रसता सहसाऽज्ञेनेव कुतो निवार्यते रसज्ञंमन्येन त्वया, तस्मादुक्तनिवारणमप्रामाणिकमिति भावः ॥ ७६—८० ॥

इति श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्नगोस्वामिश्रीदामोदरशास्त्रिविरचितायां भक्तिरसायनव्याख्यायां प्रेमप्रपायां भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः



"सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः" ॥

अयमेव भावो विभावैरनुभावैर्व्यभिचारिभिः सुखरूपतया प्रतीयमानो रस उच्यते, तत्र विभावयति=वासनाऽऽत्मतया स्थितां रतिमास्वादाङ्कुरयोग्यतां नयति, इति विभाव आलम्बनत्वेनोद्दीपनत्वेन द्विविधः, तदुक्तम्—

"विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः" ॥

तत्रालम्बनो यथा—

अयं कम्बुग्रीवः कमलकमनीयाक्षिपटिमा
तमालश्यामाङ्गद्युतिरतितरां छत्रितशिराः ।
दरश्रीवत्साङ्कः स्फुरदरिदराद्यङ्कितकरः
करोत्युच्चैर्मोदं मम मधुरमूर्त्तिर्मधुरिपुः ॥

उद्दीपनो यथा—

ध्यानं बलात् परमहंसकुलस्य भिन्दन्
निन्दन् सुधामधुरिमाणमधीरधर्मा ।
कन्दर्पशासनधुरां मुहुरेव शंसन्
वंशीध्वनिर्जयति कंसनिषूदनस्य ॥

अनु पश्चात् स्थाय्युद्बोधानन्तरं भावयति=स्थायिनमास्वादयतीत्यनुभावः, अयमपि स्वाभाविकत्वौपाधिकत्वाभ्यां द्विधा, तत्र पूर्वधर्माक्रान्ताः सात्त्विका उच्यन्ते, परधर्माक्रान्ता अनुभावाः–तदुक्तम्—

"ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

"सजातीयैर्विजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः" ॥

अयमेव भावो विभावैरनुभावैर्व्यभिचारिभिः सुखरूपतया प्रतीयमानो रस उच्यते, तत्र विभावयति=वासनाऽऽत्मतया स्थितां रतिमास्वादाङ्कुरयोग्यतां नयति, इति विभाव आलम्बनत्वेनोद्दीपनत्वेन द्विविधः, तदुक्तम्—

"विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः" ॥

तत्रालम्बनो यथा—

अयं कम्बुग्रीवः कमलकमनीयाक्षिपटिमा
तमालश्यामाङ्गद्युतिरतितरां छत्रितशिराः ।
दरश्रीवत्साङ्कः स्फुरदरिदराद्यङ्कितकरः
करोत्युच्चैर्मोदं मम मधुरमूर्त्तिर्मधुरिपुः ॥

उद्दीपनो यथा—

ध्यानं बलात् परमहंसकुलस्य भिन्दन्
निन्दन् सुधामधुरिमाणमधीरधर्मा ।
कन्दर्पशासनधुरां मुहुरेव शंसन्
वंशीध्वनिर्जयति कंसनिषूदनस्य ॥

अनु पश्चात् स्थाय्युद्बोधानन्तरं भावयति=स्थायिनमास्वादयतीत्यनुभावः, अयमपि स्वाभाविकत्वौपाधिकत्वाभ्यां द्विधा, तत्र पूर्वधर्माक्रान्ताः सात्त्विका उच्यन्ते, परधर्माक्रान्ता अनुभावाः–तदुक्तम्—

"ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

तत्र निर्वेदः—

महार्तिविप्रयोगेर्ष्यासद्विवेकादिकल्पितम् ।
स्वावमाननमेवात्र निर्वेद इति कथ्यते ॥
अत्र चिन्ताऽश्रुवैवर्ण्यदैन्यनिश्वसितादयः ।

यथा—

भवतु माधवजल्पमशृण्वतोः
श्रवणयोरलमश्रवणिर्मम ।
तमविलोकयतोरविलोकनिः
सखि ! विलोकनयोस्तु किलानयोः ॥

ग्लानिः—

ओजः सोमात्मकं देहे बलपुष्टिकृदस्य तु ।
क्षयाच्छ्रमाधिरत्याद्यैर्ग्लानिर्निष्प्राणता मता ॥
कम्पाङ्गजाड्यवैवर्ण्यकार्श्यदृग्भ्रमणादिकृत् ।

यथा—

गुम्फितुं निरुपमां वनस्रजं—
चारुपुष्पपटलं विचिन्वती ।
दुर्गमे क्लमभरातिदुर्बला
कानने क्षणमभून्मृगेक्षणा ॥

शङ्का—

स्वीयचौर्य्यापराधादेः परक्रौर्यादितस्तथा ।
स्वानिष्टोत्प्रेक्षणं यत्तु सा शङ्केत्यभिधीयते ॥
अत्रास्यशोषवैवर्ण्यदिक्प्रेक्षालीनताऽऽदयः ।

यथा—

सतर्णकं डिम्भकदम्बकं हरन्
सदम्भमम्भोरुहसम्भवस्तदा ।

तत्र निर्वेदः—

महार्त्तिविप्रयोगेर्ष्यासद्विवेकादिकल्पितम् ।
स्वावमाननमेवात्र निर्वेद इति कथ्यते ॥
अत्र चिन्ताऽश्रुवैवर्ण्यदैन्यनिश्वसितादयः ।

यथा—

भवतु माधवजल्पमशृण्वतोः
श्रवणयोरलमश्रवणिर्मम ।
तमविलोकयतोरविलोकनिः
सखि ! विलोकनयोस्तु किलानयोः ॥

ग्लानिः—

ओजः सोमात्मकं देहे बलपुष्टिकृदस्य तु ।
क्षयाच्छ्रमाधिरत्याद्यैर्ग्लानिर्निष्प्राणता मता ॥
कम्पाङ्गजाड्यवैवर्ण्यकार्श्यदृग्भ्रमणादिकृत् ।

यथा—

गुम्फितुं निरुपमां वनस्रजं—
चारुपुष्पपटलं विचिन्वती ।
दुर्गमे क्रमभरातिदुर्बला
कानने क्षणमभून्मृगेक्षणा ॥

शङ्का—

स्वीयचौर्य्यापराधादेः परक्रौर्यादितस्तथा ।
स्वानिष्टोत्प्रेक्षणं यत्तु सा शङ्केत्यभिधीयते ॥
अनास्यशोषवैवर्ण्यदिक्प्रेक्षालीनताऽऽदयः ।

यथा—

सतर्णकं डिम्भकदम्बकं हरन्
सदम्भमम्भोरुहसम्भवस्तदा ।

आलस्यम्—

सामर्थ्यस्यापि सद्भावे क्रियाऽनुन्मुखता हि या ।
तृप्तिश्रमादिसंभूता तदालस्यमुदीर्यते ॥
अत्राङ्गभङ्गो जृम्भा च क्रियाद्वेषोऽक्षिमर्दनम् ।
शय्याऽऽसनैकप्रियतातन्द्रानिद्राऽऽदयोऽपि च ॥

यथा—

सुष्ठु निःसहतनुः सुबलोऽभूत् प्रीतये मम विधाय नियुद्धम् ।
मोटयन्तमभितो निजमङ्गं नाहवाय सहसाऽऽह्वयतामुम् ॥

दैन्यम्—

दुःखत्रासापराधाद्यैरनौर्जित्यं तु दीनता ।
चाटुकृन्मान्द्यमालिन्यचिन्ताऽङ्गजडिमादिकृत् ॥

यथा—

अभिद्रवति मामीश ! शरस्तप्तायसः प्रभो ! ।
कामं दहतु मां नाथ ! मा मे गर्भो निपात्यताम् ॥

चिन्ता—

ध्यानं चिन्ता भवेदिष्टानाप्त्यनिष्टाप्तिनिर्मितम् ।
श्वासाधोमुखत्वभूलेखवैवर्ण्योन्निद्रता इह ॥
विलापोत्तापकृशता बाष्पदैन्यादयोऽपि च ।

यथा—

कृत्वा मुखान्यवशुचः श्वसनेन शुष्य—
द्विम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमपिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स तूष्णीम् ॥

आलस्यम्—

सामर्थ्यस्यापि सद्भावे क्रियाऽनुन्मुखता हि या ।
तृप्तिश्रमादिसंभूता तदालस्यमुदीर्यते ॥
अत्राङ्गभङ्गो जृम्भा च क्रियाद्वेषोऽक्षिमर्दनम् ।
शय्याऽऽसनैकप्रियतातन्द्रानिद्राऽऽदयोऽपि च ॥

यथा—

सुष्ठु निःसहतनुः सुबलोऽभूत् प्रीतये मम विधाय नियुद्धम् ।
मोटयन्तमभितो निजमङ्गं नाह्वाय सहसाऽऽह्वयतामुम् ॥

दैन्यम्—

दुःखत्रासापराधाद्यैरनौर्जित्यं तु दीनता ।
चाटुकृन्मान्द्यमालिन्यचिन्ताऽऽङ्गजडिमादिकृत् ॥

यथा—

अभिद्रवति मामीश ! शरस्तप्तायसः प्रभो ! ।
कामं दहतु मां नाथ ! मा मे गर्भो निपात्यताम् ॥

चिन्ता—

ध्यानं चिन्ता भवेदिष्टानाप्त्यनिष्टाप्तिनिर्मितम् ।
श्वासाधोमुख्यभूलेखवैवर्ण्योन्निद्रता इह ॥
विलापोत्तापकृशता बाष्पदैन्यादयोऽपि च ।

यथा—

कृत्वा मुख्यान्यवमुचः श्वसनेन शुष्य—
द्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि
तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥

यथा—

गोविन्दे स्वयमकरोः सरोजनेत्रे !
प्रेमान्धा वरवपुरर्पणं सखि ! त्वम्
कार्पण्यं न कुरु दरावलोकदाने
विक्रीते करिणि किमङ्कुशे विवादः ॥

चपलता—

रागद्वेषादिभिश्चित्तलाघवं चापलं भवेत् ।
तत्राविचारपारुष्यस्वच्छन्दाचरणादयः ॥

यथा—

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्य्यशुल्काम् ॥

हर्षः—

अभीष्टेक्षणलाभादिजाता चेतःप्रसन्नता ।
हर्षः स्याद्; इह रोमाञ्चः स्वेदोऽश्रुमुखफुल्लता ॥
आवेगोन्मादजडतास्तथा मोहादयोऽपि च ।

यथा—

तत्रैकांऽसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥

आवेगः—

चित्तस्य संभ्रमो यः स्यादावेगोऽयं स चाष्टधा ।
प्रियाप्रियानलमरुद्वर्षोत्पातगजारितः ॥
प्रियोत्थे पुलकः सान्त्वं चापल्याभ्युद्गमादयः ।

यथा—

गोविन्दे स्वयमकरोः सरोजनेत्रे !
प्रेमान्धा वरवपुरर्पणं सखि ! त्वम्
कार्पण्यं न कुरु दरावलोकदाने
विक्रीते करिणि किमङ्कुशे विवादः ॥

चपलता—

रागद्वेषादिभिश्चित्तलाघवं चापलं भवेत् ।
तत्राविचारपारुष्यस्वच्छन्दाचरणादयः ॥

यथा—

श्वो भाविनि त्वमजितोद्वहने विदर्भान्
गुप्तः समेत्य पृतनापतिभिः परीतः ।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥

हर्षः—

अभीष्टेक्षणलाभादिजाता चेतःप्रसन्नता ।
हर्षः स्याद्; इह रोमाञ्चः स्वेदोऽश्रुमुखफुल्लता ॥
आवेगोन्मादजडतास्तथा मोहादयोऽपि च ।

यथा—

तत्रैकांऽसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥

आवेगः—

चित्तस्य संभ्रमो यः स्यादावेगोऽयं स चाष्टधा ।
प्रियाप्रियानलमरुद्वर्षोत्पातगजारितः ॥
प्रियोत्थे पुलकः सान्त्वं चापल्याभ्युद्गमादयः ।

मायां वितत्येतितुमात्मवैभवं-
ह्यहं कियानैच्छमिवार्चिरग्नौ ॥

औत्सुक्यम्—

कालाक्षमत्वमौत्सुक्यमिष्टेक्षाऽऽप्तिस्पृहाऽऽदिभिः ।
मुखशोषत्वराचिन्तानिश्वासास्थिरताऽऽदिकृत् ॥

यथा—

प्राप्तं निशम्य नरलोचनपानपात्र-
मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे-
द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥

निद्रा—

चिन्ताऽऽलस्यनिसर्गक्लमादिभिश्चित्तमीलनं निद्रा ।
तत्राङ्गभङ्गजृम्भाजाड्यश्वासाक्षिमीलनानि स्युः ॥

यथा—

संक्रान्तधातुचित्रा
सुरतान्ते सा नितान्ततान्ताऽद्य ।
वक्षसि निक्षिप्ताङ्गी
हरेर्विशाखा ययौ निद्राम् ॥

अपस्मारः—

दुःखोत्थधातुवैषम्याद्भुतश्चित्तविप्लवः ।
अपस्मारोऽत्र पतनं धावनास्फोटनभ्रमाः ॥
कम्पः फेनस्रुतिर्बाहुक्षेपविक्रोशनादयः ।

यथा—

फेनायते प्रतिपदं क्षिपते भुजोर्मि—
माघूर्णते लुठति कूजति लीयते च ।

मायां वितत्येक्षितुमात्मवैभवं-
ह्यहं कियानैच्छमिवार्चिरग्नौ ॥

औत्सुक्यम्—

कालाक्षमत्वमौत्सुक्यमिष्टेक्षाऽऽप्तिस्पृहाऽऽदिभिः ।
मुखशोषत्वराचिन्तानिश्वासास्थिरताऽऽदिकृत् ॥

यथा—

प्राप्तं निशम्य नरलोचनपानपात्र
मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे
द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥

निद्रा—

चिन्ताऽऽलस्यनिसर्गक्लमादिभिश्चित्तमीलनं निद्रा ।
तत्राङ्गभङ्गजृम्भाजाड्यश्वासाक्षिमीलनानि स्युः ॥

यथा—

संक्रान्तधातुचित्रा
सुरतान्ते सा नितान्ततान्ताऽत्र ।
वक्षसि निक्षिप्ताङ्गी
हरेर्विशाखा ययौ निद्राम् ॥

अपस्मारः—

दुःखोत्थधातुवैषम्यादद्भुतश्चित्तविप्लवः ।
अपस्मारोऽत्र पतनं धावनास्फोटनभ्रमाः ॥
कम्पः फेनस्रुतिर्बाहुक्षेपविक्रोशनादयः ।

यथा—

फेनायते प्रतिपदं क्षिपते भुजोर्मि—
माघूर्णते लुठति कृजति लीयते च ।

त्रासः—

त्रासः क्षोभो हृदि तडिद्‌घोरसत्त्वोग्रनिस्वनैः ।
पार्श्वस्थालम्बरोमाञ्चकम्पस्तम्भभ्रमादिकृत् ॥

यथा—

वाढं निबिडया सद्यस्तडिता ताडितेक्षणः ।
रक्ष कृष्णेति चुक्रोश कोऽपि गोपीस्तनन्धयः ॥

वितर्कः—

विमर्शात् संशयादेश्च वितर्कस्तूह उच्यते ।
एष भ्रूक्षेपणशिरोऽङ्गलिसंचालनादिकृत् ॥

यथा—

असौ किं तापिच्छो न हि यदमलश्रीरिह गतिः
पयोदः किं वाऽयं न यदिह निरङ्को हिमकरः ।
जगन्मोहारम्भो गुरुमधुरवंशीध्वनिरितो—
ध्रुवं मूर्धन्यद्रेर्विधुमुखि ! मुकुन्दो विहरति ॥ इति ॥

अत्र च "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"—रिति पारमर्षसूत्रं प्रमाणमवगन्तव्यम् विस्तरस्त्वस्य "सरसः केचि" दित्यत्र प्रदर्शयिष्यते ॥२॥

संमति किंनिष्ठो वेति द्वितीयप्रश्नमुत्तरयति—सुखेति ।

सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ॥
तद्‌व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः प्रति ॥३॥

रसात्मकस्य सुखस्य "रसो वै सः" रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" "एष ह्येवानन्दयाति" इत्यादयो भगवत्यः श्रुतयः परमात्मनो रसरूपत्वं संगिरन्ते, अतश्चात्मन एव जगदाधारता "कुक्षिस्थाखिलभुवनमि"त्यागमैरवधारिता, तदाधारस्य वास्तविकस्याप्रसिद्धेराह—"तदाधारो न विद्यते" इति

त्रासः—

त्रासः क्षोभो हृदि तडिद्‌घोरसत्त्वोग्रनिस्वनैः ।
पार्श्वस्थालम्बरोमाञ्चकम्पस्तम्भभ्रमादिकृत् ॥

यथा—

बाढं निबिडया सद्यस्तडिता ताडितेक्षणः ।
रक्ष कृष्णेति चुक्रोश कोऽपि गोपीस्तनन्धयः ॥

वितर्कः—

विमर्शात् संशयादेश्च वितर्कस्तूह उच्यते ।
एष भ्रूक्षेपणशिरोऽङ्गुलिसंचालनादिकृत् ॥

यथा—

असौ किं तापिच्छो न हि यदमलश्रीरिह गतिः
पयोदः किं वाऽयं न यदिह निरङ्को हिमकरः ।
जगन्मोहारम्भो गुरुमधुरवंशीध्वनिरितो—
ध्रुवं मूर्धन्यद्रेर्विधुमुखि ! मुकुन्दो विहरति ॥ इति ॥

अत्र च "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"—रिति पारमर्षसूत्रं प्रमाणमवगन्तव्यम् विस्तरस्तस्य "सरसः केचि" दित्यत्र प्रदर्शयिष्यते ॥२॥

संप्रति किंनिष्ठो वेति द्वितीयप्रश्नमुत्तरयति—सुखेति ।

सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ॥
तद्‌व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः प्रति ॥३॥

रसात्मकस्य सुखस्य "रसो वै सः" रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" "एष ह्येवानन्दयाति" इत्यादयो भगवत्यः श्रुतयः परमात्मनो रसरूपत्वं संगिरन्ते, अतश्चात्मन एव जगदाधारता "कुक्षिस्थाखिलभुवनमि"त्याद्यागमैरवधारिता, तदाधारस्य वास्तविकस्याप्रसिद्धेराह—"तदाधारो न विद्यते" इति

भिनेतव्यनिष्ठाः; यथास्वं=सुखजननस्वभावाः सुखहेतवः; दुःख जननस्वभावा दुःखहेतवो भवन्ति लोकनियमाक्रान्ततया न तं व्यभिचरन्तीत्यर्थः, सर्वेऽपि पुनः सामाजिकवृत्तयः केवलसुख जनकाः, अयमत्राभिसंधिः—लोके हि पुत्रादेर्जन्मादीनां सुख कारणत्वं तस्य मरणादीनां दुःखकारणत्वं च यदानुभविकं तत्र पुत्रसामान्यस्य; किन्तु स्वनिरूपितत्वविशिष्टत्वेन ज्ञातस्यैव, शत्रुपुत्रादेस्तेषां प्रत्युत व्यत्ययेन तथात्वदर्शनाद्, काव्ये तु धर्मिग्राहकमानसिद्धस्य व्यक्तिविशेषनिरूपितत्वादिप्रमोषणात्मकसाधारणीकरणव्यापारस्य महिम्ना दुःखप्रयोजकविशेषांशाभानान्नैव दुःखाधायकता, न च तुल्ययुक्त्या सुखप्रयोजकविशेषांशाभानस्यापि प्रतिबन्धात्सुखाधायकताऽपि कथंकारं स्यादिति वाच्यम्, प्रमोषस्य फलबलकल्प्यत्वेन दुःखाननुभवात्तत्प्रमोषः कल्प्यते, सुखानुभवाद् निधुवनसहचराधरक्षतादिवत् तत्प्रमोषास्वीकाराद्, अथ वा मा भूदेवान्तःकरणजं सुखं, साधारणीकरणव्यापृतित एव भग्नावरणचिदात्मकरसस्यैवानन्दात्मकतयोल्लासात्सुखसाक्षात्कृतेरवर्जनीयत्वाद्, दुःखप्रत्ययस्तु कुतस्त्यः स्याद्, विगलितवेद्यान्तरसंपर्कस्यापि रसेऽनुभवसिद्धतया तद्भानायोग्यत्वाचेति साधूक्तं सुखमात्रैकहेतव इति ॥ ५ ॥

उक्तमर्थं विशदयति—अत इति ।

अतो न करुणादीनां रसत्वं प्रतिहन्यते ॥
भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात् ॥६॥

सामाजिकनिष्ठानां भावानां=स्थाय्यादीनां यतो दुःखजनकाभावस्य निश्चयोऽतः करुणभयानकादीनां रसत्वं न विरुध्यते, अन्यथा तेषामनुभवार्थं जनानां साग्रहा प्रवृत्तिर्नोपपद्येत; प्रवृत्तिं प्रतीष्टसाधनत्वज्ञानस्य कारणत्वादिति भावः ॥६॥

भिनेतव्यनिष्ठाः; यथास्वं=सुखजननस्वभावाः सुखहेतवः; दुःख जननस्वभावा दुःखहेतवो भवन्ति लोकनियमाक्रान्ततया न तं व्यभिचरन्तीत्यर्थः, सर्वेऽपि पुनः सामाजिकवृत्तयः केवलसुख जनकाः, अयमत्राभिसंधिः—लोके हि पुत्रादेर्जन्मादीनां सुख कारणत्वं तस्य मरणादीनां दुःखकारणत्वं च यदानुभविकं तत्र पुत्रसामान्यस्य; किन्तु स्वनिरूपितत्वविशिष्टत्वेन ज्ञातस्यैव, शत्रुपुत्रादेस्तेषां प्रत्युत व्यत्ययेन तथात्वदर्शनाद्, काव्ये तु धर्मि ग्राहकमानसिद्धस्य व्यक्तिविशेषनिरूपितत्वादिप्रमोषणात्मकसाधारणीकरणव्यापारस्य महिम्ना दुःखप्रयोजकविशेषांशाभानान्नैव दुःखाधायकता, न च तुल्ययुक्तया सुखप्रयोजकविशेषांशाभानस्यापि प्रतिबन्धात्सुखाधायकताऽपि कथंकारं स्यादिति वाच्यम्, प्रमोषस्य फलबलकल्प्यत्वेन दुःखाननुभवात्तत्प्रमोषः कल्प्यते, सुखानुभवाद्द निधुवनसहचराधरक्षतादिवत् तत्प्रमोषा स्वीकाराद्द, अथ वा मा भूदेवान्तःकरणजं सुखं, साधारणीकरणव्यापृतित एव भग्नावरणचिदात्मकरसस्यैवानन्दात्मकतयोल्लासात्सुखसाक्षात्कृतेरवर्जनीयत्वाद्द, दुःखप्रत्ययस्तु कुतस्त्यः स्याद्द, विगलितवेद्यान्तरसंपर्कस्यापि रसेऽनुभवसिद्धतया तद्भानायोग्यत्वाच्चेति साधूक्तं सुखमात्रैकहेतव इति ॥ ५ ॥

उक्तमर्थं विशदयति—अत इति ।

**अतो न करुणादीनां रसत्वं प्रतिहन्यते ॥**
**भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात् ॥६॥**

सामाजिकनिष्ठानां भावानां=स्थाय्यादीनां यतो दुःखजनकाभावस्य निश्चयोऽतः करुणभयानकादीनां रसत्वं न विरुध्यते, अन्यथा तेषामनुभवार्थं जनानां साग्रहा प्रवृत्तिर्नोपपद्येत; प्रवृत्तिप्रतीष्टसाधनत्वज्ञानस्य कारणत्वादिति भावः ॥६॥

उद्बोधे विभावानुभावव्यभिचारिणां त्रयं समुदितं कारणं भवतीति ज्ञातव्यम्, अयं भावः—यद्यपि लोके रत्यादिकं प्रति कारणकार्यसहकारिताऽऽपन्नानि वस्तूनि; तथाऽपि काव्येपु पानकरसन्यायेनास्वादं प्रति कारणताभाञ्जि संपद्यन्ते, पदार्थस्वभावस्य पर्यनुयोगानर्हत्वादिति तु तत्त्वम् ॥१०॥

उक्तालौकिकत्वबोधकत्वमेव भावानामुपपादयति—ज्ञातेति ।

ज्ञातस्वपरसंबन्धादन्ये साधारणात्मना ॥
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥११॥

त्रयोप्यमी भावाः=विभावानुभावव्यभिचार्याख्याः, ज्ञातः स्वस्य परस्य च संबन्धो निरूपितत्वाश्रयत्वादिको यस्य तादृशादलौकिकात् कारणादेः, अन्येऽलौकिकव्यापारसाधारणीकरणाख्यशालितयाऽलौकिकाः सन्तोऽलौकिकं=साधारणीभूतं भावं स्थायिनं बोधयन्ति ॥ ११ ॥

ततः किं फलतीत्याह—भावेति ।

भावत्रितयसंसृष्टस्थायिभावावगाहिनी ॥
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥१२॥

भावानां=विभावानुभावसंचारिणां त्रितयेन=समुदायेन संसृष्टो यथायथमुद्बोधितः भत्यायितः परिपोषितो यः स्थायिभावस्तद्विषयिका समूहालम्बनं नानाप्रकारतानिरूपितनानाविशेष्यतानिरूपकं यज्ज्ञानं तद्रूपा समुद्रिक्तसत्त्वकचेतःपरिणामात्मिका वृत्तिर्जायते, प्रपानकरसन्यायेनेति भावः ॥१२॥

तया किं क्रियत इत्याह—सेति ।

साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ॥
तद् रसः, केचिदाचार्यास्तामेव तु रसं विदुः ॥१३॥

उद्बोधे विभावानुभावव्यभिचारिणां त्रयं समुदितं कारणं भवतीति ज्ञातव्यम्, अयं भावः—यद्यपि लोके रत्यादिकं प्रति कारणकार्य्यसहकारिताऽऽपन्नानि वस्तूनि; तथाऽपि काव्येषु पानकरसन्यायेनास्वादं प्रति कारणताभाञ्जि संपद्यन्ते, पदार्थ स्वभावस्य पर्यनुयोगानर्हत्वादिति तु तत्त्वम् ॥१०॥

उक्तालौकिकत्वबोधकत्वमेव भावानामुपपादयति—ज्ञातेति।

ज्ञातस्वपरसंबन्धादन्ये साधारणात्मना ॥
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥११॥

त्रयोप्यमी भावाः=विभावानुभावव्यभिचार्य्याख्याः, ज्ञातः स्वस्य परस्य च सबन्धो निरूपितत्वाश्रयत्वादिको यस्य तादृशादलौकिकात् कारणादेः, अन्येऽलौकिकव्यापारसाधारणीकरणाख्यशालितयाऽलौकिकाः सन्तोऽलौकिकं=साधारणीभूतं; भावं स्थायिनं बोधयन्ति ॥ ११ ॥

ततः किं फलतीत्याह—भावेति।

भावत्रितयसंसृष्टस्थायिभावावगाहिनी ॥
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥१२॥

भावानां=विभावानुभावसंचारिणां त्रितयेन=समुदायेन संसृष्टो यथायथमुद्बोधितः प्रत्यायितः परिपोषितो यः स्थायिभावस्तद्विषयिका समूहालम्बनं नानाप्रकारतानिरूपितनानाविशेष्यतानिरूपकं यज्ज्ञान तद्रूपा समुद्रिक्तसत्त्वकचेतःपरिणामात्मिका वृत्तिर्जायते, प्रपानकरसन्यायेनेति भावः ॥१२॥

तया किं क्रियत इत्याह—सेति।

साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ॥
तद् रसः, केचिदाचार्य्यास्तामेव तु रसं विदुः ॥१३॥

त्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो रस इत्यभ्युपागमन् ।

भट्टनायकानुवर्तिनस्तु—नाट्यादिना व्यक्तिविशेषवृत्तिलनिरूपितलाभ्यां जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोपाद्रतिलादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्येनानुभूतचररत्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्त्वोद्रेकेणानन्दरूपो रसः शब्दस्य भोगाख्यतृतीयव्यापारेण साक्षात् क्रियत इत्युपागुः ।

इत्थं स्वस्वशेमुषीविकाससाहायकमवलम्ब्य पारमर्षसूत्रघटकपञ्चमीनिष्पत्तिपदार्थवैविध्येनाभियुक्ताः स्वस्वमतानुसारेण रसतत्त्वं प्रत्यपीपदन्, परन्तु मुनिसंमतरहस्यानाकलनाच्छास्त्रसिद्धान्तिनामश्रद्धेयान्येवाखिलान्युक्तमतानि तदनुसारीणि पराणि चानिर्दिष्टान्येकदेशिमतानि ।

तत्राश्रद्धाबीजानि चेमानि संक्षेपतः प्रधानानि-प्रथमे तावद्विप्रकृष्टलाल्लौकिकलात् काल्पनिकलादर्थान्तरता ।

द्वितीयस्मिन् विमतलादनिर्वचनीयस्य भ्रमविषयलाच्च तथालम् ।

तृतीयेऽपि भ्रमास्पदत्वं तादृशमेव ।

तुरीये भेदग्रहेण बाधात् कथमपि भेदाग्रहेऽपि नलादौ भैम्यादिरतिग्रहस्य सामाजिकप्रत्ययनौपयिकलात् श्रव्यस्थले पक्षधर्मताज्ञानविरहाच्चाभिमतरसपरिपन्थिताऽनिवार्या ।

पञ्चमे तु प्रमाणागोचरस्य शब्दनिष्ठक्रमिकव्यापारत्रयस्यैवारुन्तुदतेति ।

अभिनवगुप्ताचार्यमम्मटभट्टादयस्तु—साधारणीकृतिव्यापारमहिमभग्नावरणचिद्विशिष्टस्थायी रस इति सिद्धान्तयन्ति स्म ।

एतदेव मतं मूलकारेण केचिदित्यादिना सूचितम्, अस्वरसबीजं त्वत्र श्रुतिविरोध एव, श्रुतौ हि "रसो वै सः"

त्रिमत्वेन गृहीतैर्विभावादिहेतुभिर्नलादिगतरत्यादिरनुमीयमानो रस इत्यभ्युपागमन् ।

भट्टनायकानुवर्त्तिनस्तु—नाट्यादिना व्यक्तिविशेषवृत्तिलनिरूपितलाभ्या जनितेऽपि स्थायिज्ञाने भावनया तयोः प्रमोपाद्रतिलादिनैव प्रतीतरत्यादेः स्ववृत्तिरत्यादिसाजात्येनानुभूतचररत्यादिसंस्कारोद्बोधे ज्ञानस्य स्वप्रकाशत्वेन सत्त्वोद्रेकेणानन्दरूपो रसः शब्दस्य भोगाख्यतृतीयव्यापारेण साक्षात् क्रियत इत्युपागु' ।

इत्थं स्वस्वशेमुषीविकाससाहायकमवलम्ब्य पारमर्षसूत्रघटकपञ्चमीनिष्पत्तिपदार्थवैविध्येनाभियुक्ताः स्वस्वमतानुसारेण रसतत्त्व प्रत्यपीपदन्, परन्तु मुनिसंमतरहस्यानाकलनाच्छास्त्रसिद्धान्तिनामश्रद्धेयान्येवाखिलान्युक्तमतानि तदनुसारीणि पराणि चानिर्दिष्टान्येकदेशिमतानि ।

तत्राश्रद्धाबीजानि चेमानि सक्षेपतः प्रधानानि-प्रथमे तावद्विप्रकृष्टलाल्लौकिकलात् काल्पनिकलादर्थान्तरता ।

द्वितीयस्मिन् विमतलादनिर्वचनीयस्य भ्रमविषयलाच्च तथालम् ।

तृतीयेऽपि भ्रमास्पदत्वं तादृशमेव ।

तुरीये भेदग्रहेण बाधात् कथमपि भेदाग्रहेऽपि नलादौ भैम्यादिरतिग्रहस्य सामाजिकप्रहर्षणनौपयिकलात् श्रव्यस्थले पक्षधर्मताज्ञानविरहाच्चाभिमतरसपरिपन्थिताऽनिवार्य्या ।

पञ्चमे तु प्रमाणागोचरस्य शब्दनिष्ठक्रमिकव्यापारत्रयस्यैवारन्नुदतेति ।

अभिनवगुप्ताचार्यमम्मटभट्टादयस्तु—साधारणीकृतिव्यापारमहिमभग्नावरणचिद्विशिष्टस्थायी रस इति सिद्धान्तयन्ति स्म ।

एतदेव मत मूलकारेण के चिदित्यादिना सूचितम्, अस्वरसबीज त्वत्र श्रुतिविरोध एव, श्रुतौ हि "रसो वै स."

पि ध्वनिशब्दव्यवहार्य्यः, स चाभिधालक्षणाव्यापारयोरेकत-रस्याव्यवहितोत्तरं प्रसरतीत्यतोऽभिधामूला, लक्षणमूला च पूर्वं द्विधोच्यते व्यञ्जना, इयं किल विवक्षितान्यपरवाच्यध्वनि-रविवक्षितवाच्यध्वनिश्च क्रमेणोच्यते, तत्र मूलभूतलक्षणाया अन्वयानुपपत्तितात्पर्यानुपपत्तिप्रयुक्ततया द्वैविध्येन; तन्मूलध्व-निरपि क्रमेणात्यन्ततिरस्कृतवाच्योऽर्थान्तरसंक्रमितवाच्यश्चोच्यते, तथा विवक्षितान्यपरवाच्योऽभिधामूलोऽपि ध्वनिर्द्विप्रकारो व्यङ्ग्यप्रतीतिक्रमस्य लक्ष्यतालक्ष्यताभ्यां, प्रथमः संलक्ष्य-क्रमोऽन्योऽसंलक्ष्यक्रमः, सोऽयं प्रकृतकारिकया प्रतिपादित इति ॥१५॥

प्रसङ्गात्संलक्ष्यक्रमध्वनिमपि दर्शयति—व्यवेति ।

## व्यवधानात्क्रमो लक्ष्यो वस्त्वलंकारयोर्ध्वनौ ।
## लक्ष्यव्यङ्ग्यक्रमं तस्माद् ध्वनिमेतं प्रचक्षते ॥१६॥

अयंभावः—वाच्यबोधोत्तरं व्यञ्जिजिपितप्रतीत्यौपयिक-सामग्रीसंधानेन व्यवधीयमाना भवति व्यङ्ग्यव्यक्तिरत आह—व्यवधानादिति, इदमिहावधेयं—पूर्वोक्ता व्यञ्जना प्रकारान्तरेण पुनर्द्विविधा—शाब्दी तथाऽऽर्थी, तत्र—

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ॥
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्"

इत्युक्तप्रकारा शाब्दी, तथा—

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥
प्रस्तावदेशकालादेवशिष्ट्यात् प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा"

इत्युक्तरीत्या चार्थी, संयोगादयश्च—महाभाष्याद्वितीयमार्मिक-महावैयाकरणमहाकविमहायोगिमहाराजभर्तृहरिणा निर्दिष्टाः—

पि ध्वनिशब्दव्यवहार्य्यः, स चाभिधालक्षणाव्यापारयोरेकत रस्याव्यवहितोत्तरं प्रसरतीत्यतोऽभिधामूला, लक्षणमूला च पूर्वं द्विधोच्यते व्यञ्जना, इयं किल विवक्षितान्यपरवाच्यध्वनि-रविवक्षितवाच्यध्वनिश्च क्रमेणोच्यते, तत्र मूलभूतलक्षणाया अन्वयानुपपत्तितात्पर्यानुपपत्तिप्रयुक्ततया द्वैविध्येन; तन्मूलध्व-निरपि क्रमेणात्यन्ततिरस्कृतवाच्योऽर्थान्तरसंक्रमितवाच्यश्चोच्यते, तथा विवक्षितान्यपरवाच्योऽभिधामूलोऽपि ध्वनिर्द्विप्रकारो व्यङ्ग्यप्रतीतिक्रमस्य लक्ष्यलालक्ष्यत्वाभ्यां, प्रथमः संलक्ष्य-क्रमोऽन्योऽसंलक्ष्यक्रमः, सोऽयं प्रकृतकारिकया प्रतिपादित-इति ॥१५॥

प्रसङ्गात्संलक्ष्यक्रमध्वनिमपि दर्शयति—व्यवेति ।

व्यवधानात्क्रमो लक्ष्यो वस्त्वलंकारयोर्ध्वनौ ।
लक्ष्यव्यङ्ग्यक्रमं तस्माद् ध्वनिमेतं प्रचक्षते ॥१६॥

अयंभावः—वाच्यबोधोत्तरं व्यञ्जिजिषितप्रतीत्यौपयिक सामग्रीसंधानेन व्यवधीयमाना भवति व्यङ्ग्यव्यक्तिरत आह—व्यवधानादिति, इदमिहावधेयं—पूर्वोक्ता व्यञ्जना प्रकारान्तरेण पुनर्द्विविधा—शाब्दी तथाऽऽर्थी, तत्र—

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ॥
संयोगाद्यैरवाच्यार्थधीकृद्द व्यापृतिरञ्जनम्"

इत्युक्तप्रकारा शाब्दी, तथा—

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥
प्रस्तावदेशकालादेवशिष्ट्यात् प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा"

इत्युक्तरीत्या चार्थी, संयोगादयश्च—महाभाष्याद्वितीयमार्मिक-महावैयाकरणमहाकविमहायोगिमहाराजभर्तृहरिणा निर्दिष्टाः—

अत्राध्वानं-व्रज-मा-अम्बरपयोधरेन्दुलेखारागादिपदैः स्वाभिमायाविष्कृतिरूपं वस्तु व्यज्यते ।

एवं दिङ्मात्रमुदाहृतं विस्तरभियाऽर्थशक्त्युभयशक्त्युत्थभेदतत्प्रभेदा न दर्शिताः ॥१६॥

असंलक्ष्यक्रमध्वनिविषयं विशदयति—रसेति ।

रसभावतदाभासभावशान्त्यादिरक्रमः ॥
अनन्तरक्षणे यस्माद् व्यज्यतेऽवश्यमेव सः ॥१७॥

असंलक्ष्यक्रमव्यङ्ग्यो न केवलं योगरूढ्यनुगृहीतो रसः किन्तु योगाश्रयाद्रस्यत इति रसव्युत्पत्त्या रसो भावो रसाभासो भावाभासो भावशान्तिर्भावोदयो भावसंधिर्भावशबलत्वं चेत्यष्टावपि रसपदार्थाः । अन्यत्पूर्वमुक्तम् । एषामुदाहरणानि—

तत्र रसो यथा—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलयै-
र्हृते नीवीग्रन्थौ मुखरितममन्दं रशनया ।
प्रियायाः स्वानन्दप्रतिहतधियः किन्त्वपघनो-
घनोत्तृप्यं कृष्णं प्रति समतनोत्तर्जनमिव ॥

भावश्च—

"रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः"

इत्युक्तरूपः—

स यथा—

दिवि वा भुवि वा ममास्तु वासो-
नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ-
चरणौ ते मरणेऽपि चिन्तयामि ॥

अत्राध्वानं-व्रज-मा अम्बरपयोधरेन्दुलेखारागादिपदैः स्वाभिमायाविष्कृतिरूपं वस्तु व्यज्यते।

एवं दिङ्मात्रमुदाहृतं विस्तरभियाऽर्थशक्त्युभयशक्त्युत्थभेदतत्प्रभेदा न दर्शिताः ॥१६॥

असंलक्ष्यक्रमध्वनिविषयं विशदयति—रसेति।

रसभावतदाभासभावशान्त्यादिरक्रमः ॥
अनन्तरक्षणे यस्माद् व्यज्यतेऽवश्यमेव सः ॥१७॥

असंलक्ष्यक्रमव्यङ्ग्यो न केवलं योगरूढ्यनुगृहीतो रसः किन्तु योगाश्रयाद्रस्यत इति रसव्युत्पत्त्या रसो भावो रसाभासो भावाभासो भावशान्तिर्भावोदयो भावसंधिर्भावशबलत्वं चेत्यष्टावपि रसपदार्थाः। अन्यत्पूर्वमुक्तम्। एषामुदाहरणानि—

तत्र रसो यथा—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलयै-
र्हृते नीवीग्रन्थौ मुखरितममन्दं रशनया।
प्रियायाः स्वानन्दप्रतिहतधियः किन्त्वपघनो-
घनोत्तृष्णं कृष्णं प्रति समतनोत्तर्जनमिव ॥

भावश्च—

"रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः"

इत्युक्तरूपः—

स यथा—

दिवि वा भुवि वा ममास्तु वासो-
नरके वा नरकान्तक! प्रकामम्।
अवधीरितशारदारविन्दौ-
चरणौ ते मरणेऽपि चिन्तयामि ॥

भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले
विभूष्यमाणा वृषभानुपुत्री ।
उरोगते नीलमणीन्दुहारे
स्विन्ना सकम्पा पुलकाकुलाऽऽसीत् ॥

अत्र हर्षस्योदयः ।

भावसन्धिर्यथा—

सुचिरमनुचरीभिः पाठितां कृष्णगाथां—
सदसि शुकवधूभिः शृण्वती गीयमानाम् ।
प्रणयसदयमेकं तासु विन्यस्यतीयं—
चकितचकितमन्यन्नेत्रमास्ये गुरूणाम् ॥

अत्रौत्सुक्यत्रासयोः संधिः ।

भावशाबल्यं यथा—

पतिरतिकुपितो मनः प्रमत्तं खलनिकरः किल दूषणाभिधायी ।
मुररिपुरपि वेपपेशलोऽसौ भण विमले ! कमुपायमाश्रयामि ॥

अत्र भयचपलताशङ्कौत्सुक्यानां शबलता । इति ॥१७॥

रसप्रसङ्गात् तत्कारणेषु प्रदर्शनीयेषु बाधकैकसत्त्वे साधकसहस्रस्याप्यकिञ्चित्करत्वमिति न्यायेन तत्सामग्रीघटकं प्रतिबन्धकाभावं निर्देष्टुमभावज्ञानकारणीभूतप्रतियोगिज्ञानविषयमाह—श्रुतीति ।

श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ॥
तदभावोऽपि सामग्र्यां निविष्टोऽनिष्टहानिकृत् ॥१८॥

रसस्य प्रतिबन्धका विरोधिनो ये दोषाः श्रुतिदुष्टादयः; तेषामभावोऽपि रसव्यक्तिसंपादकसामग्रीघटकीकर्त्तव्यो, येनानिष्टो रसप्रत्ययप्रतिरोधो न भवेदित्यर्थः ॥१८॥

भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले
विभूष्यमाणा वृषभानुपुत्री ।
उरोगते नीलमणीन्दुहारे
स्विन्ना सकम्पा पुलकाकुलाऽऽसीत् ॥

अत्र हर्षस्योदयः ।

भावसन्धिर्यथा—

सुचिरमनुचरीभिः पाठिता कृष्णगाथां—
सदसि शुकवधूभिः शृण्वती गीयमानाम् ।
प्रणयसदयमेकं तासु विन्यस्यतीयं—
चकितचकितमन्यन्नेत्रमास्ये गुरूणाम् ॥

अत्रौत्सुक्यत्रासयोः संधिः ।

भावशावल्यं यथा—

पतिरतिकुपितो मनः प्रमत्तं खलनिकरः किल दूषणाभिधायी ।
मुररिपुरपि वेपपेशलोऽसौ भण विमले ! कमुपायमाश्रयामि ॥

अत्र भयचपलताशङ्कौत्सुक्यानां शबलता । इति ॥१७॥

रससमङ्गात् तत्कारणेषु प्रदर्शनीयेषु बाधकैकसत्त्वे साधकसहस्रस्याप्यकिञ्चित्करत्वमिति न्यायेन तत्सामग्रीघटकं प्रतिबन्धकाभावं निर्देष्टुमभावज्ञानकारणीभूतप्रतियोगिज्ञानविषयमाह—श्रुतीति ।

श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ॥
तदभावोऽपि सामग्र्यां निविष्टोऽनिष्टहानिकृत् ॥१८॥

रसस्य प्रतिबन्धका विरोधिनो ये दोषाः श्रुतिदुष्टादयः, तेषामभावोऽपि रसव्यक्तिसंपादकसामग्रीघटकीकर्त्तव्यो, येनानिष्टो रसप्रत्ययप्रतिरोधो न भवेदित्यर्थः ॥१८॥

यावत् , तत्र निदर्शनं दशमेति—यथा "केचन दश जना ग्रामतो गङ्गास्नानाद्यर्थं गताः स्नात्वेह वृक्षमूले समुदित्य सर्वे वयं गमिष्याम इति कृतसमयाः स्नातागतास्तत्रात्मानं विहाय स्वान् गणयन्तो नवत्वं प्रतीत्य सहचरवियोगभ्रमाद्द विक्रोशन्तः केनापि चतुरेणागत्य विक्रोशहेतुं पृष्टेभ्यस्तमाकर्ण्य पुनर्गणनादिष्टेषु तेष्वन्यतमः पूर्ववत् स्वेतरान् यदा नवाजीगणत्तदैवैनेन दशमस्त्वमसीत्युक्ते तदीयवाक्यादात्मानं दशमत्वेन साक्षात्कुर्वति तस्मिन् सहर्षास्ते यथाऽऽगतं जग्मुः", तथाऽत्रापि शब्दतोऽपरोक्षज्ञानं निर्बाधमिति भावः ॥ २१ ॥

अधुना "प्रतीतिरपि कीदृशी"ति तुरीयं प्रश्नं समाधातुमाह—नित्यमिति ।

## नित्यं सुखमभिव्यक्तं "रसो वै स" इति श्रुतेः ॥
## प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥२२॥

अयमभिसंधिः—सुखं द्विविधं प्रथममापामरगोचरताऽऽस्पदं सत्त्वगुणपरिणामरूपं दुःखानुविद्धमतएव हेयकुक्षिनिक्षिप्तमपि सहजाभिनिवेशवशंवदैराग्रहेण सादरमुपादीयमानं जडतत्समुदयाप्ययशालि, चरमं तु नित्यचिदानन्दात्मस्वरूपं वस्तुतः सुखपदवाच्यं विवेकिधुरीणैरुपेयं नित्यं परन्त्वविद्याऽऽवृततया तथात्वेनानिशमननुभूयमानमावरणभङ्गेऽभिव्यज्यमानं रसत्वेन साक्षात् क्रियते, भक्तौ चावरणभङ्गो न प्रपञ्चकारणाविद्यानिवृत्तिनिबन्धनस्तादृशस्य श्रवणमनननिदिध्यासनायत्तत्वात्, किन्तु विभावादिज्ञानप्रयुक्तसाधारणीकरणनिबन्धनस्तात्कालिकस्तन्निवृत्तौ तस्यापि निवृत्तिरेतावान् विशेषः, तादृशसुखस्य रसत्वे मानं भगवती श्रुतिरेव, तदाह—"रसो वै सः" आत्मत्वादेवास्य स्वप्रकाशस्य=प्रकाशान्तरानधीनप्रकाशस्य प्रतीतिः साक्षात्कृति-

यावत् , तत्र निदर्शनं दशमेति–यथा "केचन दश जना ग्रामतो गङ्गास्नानाद्यर्थं गताः स्नात्वेह वृक्षमूले समुदित्य सर्वे वयं गमिष्याम इति कृतसमयाः स्नातागतास्तत्रात्मानं विहाय स्वान् गणयन्तो नवत्वं प्रतीत्य सहचरवियोगभ्रमाद्‌ विक्रोशन्तः केनापि चतुरेणागत्य विक्रोशहेतुं पृष्टेभ्यस्तमाकर्ण्य पुनर्गणनायादिष्टेषु तेष्वन्यतमः पूर्ववत् स्वेतरान् यदा नवाजीगणत्तदैवैनेन दशमस्त्वमसीत्युक्ते तदीयवाक्यादात्मानं दशमत्वेन साक्षात्कुर्वति तस्मिन् सहर्षास्ते यथाऽऽगतं जग्मुः", तथाऽत्रापि शब्दतोऽपरोक्षज्ञानं निर्बाधमिति भावः ॥ २१ ॥

अधुना "प्रतीतिरपि कीदृशी"ति तुरीयं प्रश्नं समाधातुमाह—नित्यमिति ।

नित्यं सुखमभिव्यक्तं 'रसो वै स" इति श्रुतेः ॥
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥२२॥

अयमभिसंधिः–सुखं द्विविधं प्रथममापामरगोचरताऽऽस्पदसत्त्वगुणपरिणामरूपं दुःखानुविद्धमतएव हेयकुक्षिनिक्षिप्तमपि सहजाभिनिवेशवशंवदेराग्रहेण सादरमुपादीयमानं जड़तस्मुदयाप्ययशालि, चरमं तु नित्यचिदानन्दात्मस्वरूपं वस्तुत' सुखपदवाच्यं विवेकिधुरीणैरुपेयं नित्यं परन्त्वविद्याऽऽवृततया तथात्वेनानिशमननुभूयमानमावरणभङ्गेऽभिव्यज्यमानं रसत्वेन साक्षात् क्रियते, प्रकृते चावरणभङ्गो न प्रपञ्चकारणाविद्यानिवृत्तिनिबन्धनस्तादृशस्य श्रवणमनननिदिध्यासनायत्तत्त्वात्, किन्तु विभावादिज्ञानप्रयुक्तसाधारणीकरणनिबन्धनस्तात्कालिकस्तन्निवृत्तौ तस्यापि निवृत्तिरेतावान् विशेष', तादृशसुखस्य रसत्वे मानं भगवती श्रुतिरेव, तदाह—"रसो वै सः" आत्मत्वादेवास्य स्वप्रकाशस्य=प्रकाशान्तरानधीनप्रकाशस्य प्रतीतिः साक्षात्कृति

परमानन्द आत्मैव रस इत्याहुरागमाः ॥
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥ २४ ॥

यद्यप्यापाततो भग्नावरणचित्त्वेन जीवात्मा रसः प्रतीयते निर्दिष्टसूत्रेण; तथाऽपि रसप्रतिपादका आगमाः-"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "एष ह्येवानन्दयाति" "एतस्यैवानन्दस्यान्ये मात्रामुपजीवन्ती"त्यादयः; परमः=साम्यातिशयशून्य आनन्द आत्माऽर्थात् परमात्मैव रस इत्याहुः, उपक्रमोपसंहारादितात्पर्यनिर्णायकसमष्टिसध्रीचीना इति शेषः, परथा हि प्रामाण्यं तेषां दुरापं स्यादिति हृदयम्, उक्तसूत्रं तु गुडजिह्विकान्यायेन लौकिकरसास्वादप्रत्यायनाय विनेयोन्मुखीकरणार्थं प्रवृत्तमपि न परमात्मनो रसकेन्द्रतां वारयितुं प्रभवति, "यत्परः शब्दः स शब्दार्थ" इति न्यायादुभयत्र तात्पर्यसत्त्वे वाक्यभेदप्रसङ्गाच्च, ततश्चान्यतोऽवगमितं भगवतो रसत्वं शब्दतः खल्वभिव्यङ्क्तुमयं प्रकारो भक्तिरसास्वादनौपयिकः प्रदर्शितः ॥ २४ ॥

उक्तप्रकारेण सुखाभिव्यक्तिः शब्दतो न केवलमस्माभिरेवोच्यते; किन्तु मीमांसकैरपि भङ्ग्यैषाऽभ्युपगतेति दर्शयति—अर्थेति।

अर्थवादाधिकरणे नवशैलादिवर्णनम् ॥
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥२५॥

पूर्वमीमांसायाः प्रथमाध्यायगतद्वितीयपादस्यार्थवादाधिकरणे "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इतिजैमिनीयसिद्धान्तसूत्रीयशावरभाष्यव्याख्याने तन्त्रवार्तिके तत्रभवत्कुमारिलभट्टपादैः "के चिद् स्वयमेव श्रूयमाणगन्धमादनवर्णकप्रभृतयः प्रीतिं जनयन्ति" इत्यादिना संदर्भेण यदुक्तं; तद् श्रोतॄणां सुखमात्रार्थमेवातः स्पष्टैव शब्दात्सुखव्यक्तिः ॥२५॥

परमानन्द आत्मैव रस इत्याहुरागमाः ॥
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥ २४ ॥

यद्यप्यापाततो भग्नावरणचित्त्वेन जीवात्मा रसः प्रतीयते निर्दिष्टसूत्रेण; तथाऽपि रसप्रतिपादका आगमाः-"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" 'एष ह्येवानन्दयाति" "एतस्यैवानन्द स्यान्ये मात्रामुपजीवन्ती"त्यादयः; परमः=साम्यातिशयशून्य आनन्द आत्माऽर्थात् परमात्मैव रस इत्याहुः, उपक्रमोपसंहारादि-तात्पर्यनिर्णायकसमष्टिसधीचीना इति शेषः, परथा हि प्रामाण्यं तेषां दुरापं स्यादिति हृदयम्, उक्तसूत्रं तु गुडजिह्विकान्यायेन लौकिकरसास्वादप्रत्यायनाय विनेयोन्मुखीकरणार्थं प्रवृत्तमपि न परमात्मनो रसकेन्द्रतां वारयितुं प्रभवति, "यत्परः शब्दः स शब्दार्थ" इति न्यायादुभयत्र तात्पर्यसत्त्वे वाक्यभेदप्रसङ्गाच्च, तत श्चान्यतोऽवगमितं भगवतो रसत्वं शब्दतः खल्वभिव्यङ्क्तुमयं प्रकारो भक्तिरसास्वादनौपयिकः प्रदर्शितः ॥ २४ ॥

उक्तप्रकारेण सुखाभिव्यक्तिः शब्दतो न केवलमस्माभिरेवो च्यते; किन्तु मीमांसकैरपि भङ्ग्यैषाऽभ्युपगतेति दर्शयति—अर्थेति।

अर्थवादाधिकरणे नवशैलादिवर्णनम् ॥
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥२५॥

पूर्वमीमांसायाः प्रथमाध्यायगतद्वितीयपादस्थार्थवादाधिक रणे "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इतिजै मिनीयसिद्धान्तसूत्रीयशावरभाष्यव्याख्याने तन्त्रवार्तिके तत्रभव त्कुमारिलभट्टपादैः "के चित् स्वयमेव श्रूयमाणगन्धमादनवर्ण-कप्रभृतयः प्रीतिं जनयन्ति" इत्यादिना संदर्भेण यदुक्तं; तत् श्रोतॄणां सुखमात्रार्थमेवातः स्पष्टैव शब्दात्सुखव्यक्तिः ॥२५॥

इदानीमुक्ताचार्य्यैर्यादृशी प्रवृत्त्यङ्गताऽऽपन्ना प्रमा व्यवहारेऽनुमोदिता तादृशीं दर्शयति—देवतेति ।

देवताऽधिकृतिन्यायात् पदैरन्यपरैरपि ॥
प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेद् ॥२६॥

उत्तरमीमांसायाः प्रथमाध्याये तृतीयपादे देवताऽधिकरणे "भावं तु बादरायणोऽस्ति हि", इति सिद्धान्तसूत्रेऽद्वैतभाष्यकाराचार्याः—"विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते",इत्यादिप्रबन्धेनान्यपरैः=विधेयस्तुतितात्पर्यकैरपि पदैः=अर्थवादघटकैः, फलवती मानान्तराज्ञाता मानान्तराबाधिता च प्रमा, प्रवृत्त्यङ्गमिति शेषः, भवेद्, इति सिद्धान्तयन्ति स्म, तथा चान्यपरैरपि पदैर्बोधो दुर्निवार इति फलितम् ॥२६॥

एवं च प्रकृतेऽपि नानुपपत्तिरित्याह–तस्मेति ।

तस्मादन्यपरत्वे वा स्वानन्त्ये वा पदानि नः ॥
व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥३०॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते श्रीभगवद्भक्तिरसायने भक्तिरसप्रतिपादको-
नाम तृतीयोल्लासः ॥

ग्रन्थश्च संपूर्णः ।

---

तस्माद्=अर्थवादस्थलायुक्तप्रकाराद्, नः=अस्माकं भक्तिरसास्वादमभिलाषुकाणां पदानि स्वघटितवाक्यप्रतिपाद्येतरतात्प-

इदानीमुक्ताचार्य्यैर्यादृशी प्रत्यक्षताऽऽपन्ना प्रमा व्यवहारेऽनुमोदिता तादृशीं दर्शयति—देवतेति ।

देवताऽधिकृतिन्यायात् पदैरन्यपरैरपि ॥
प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेद् ॥२९॥

उत्तरमीमांसायाः प्रथमाध्याये तृतीयपादे देवताऽधिकरणे "भावं तु बादरायणोऽस्ति हि", इति सिद्धान्तसूत्रेऽद्वैतभाष्यकाराचार्याः—"विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते",इत्यादिप्रबन्धेनान्यपरैः=विधेयस्तुतितात्पर्यकैरपि पदैः=अर्थवादघटकैः, फलवती मानान्तरानवाप्ता मानान्तराबाधिता च प्रमा, प्रत्यक्षमिति शेषः, भवेद्, इति सिद्धान्तयन्ति स्म, तथा चान्यपरैरपि पदैर्बोधो दुर्निवार इति फलितम् ॥२९॥

एवं च प्रकृतेऽपि नानुपपत्तिरित्याह—तस्मेति ।

तस्मादन्यपरत्वे वा स्वानन्त्ये वा पदानि नः ॥
व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥३०॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते श्रीभगवद्भक्तिरसायने भक्तिरसप्रतिपादको-
नाम तृतीयोल्लासः ॥

ग्रन्थश्च संपूर्णः ।

---

तस्माद्=अर्थवादस्थलायुक्तप्रकाराद्, नः=अस्माकं भक्तिरसास्वादमभिलाषुकाणां पदानि स्वघटितवाक्यप्रतिपाद्येतरतात्प

स्थायिभावगिराऽतोऽसौ वस्त्वाकारोऽभिधीयते ॥
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥९॥
भगवान् परमानन्दस्वरूपः स्वयमेव हि ॥
मनोगतस्तदाकाररसतामेति पुष्कलम् ॥१०॥
कान्ताऽऽदिविषयेऽप्यस्ति कारणं सुखचिद्घनम् ॥
कार्य्याकारतया भेदेऽप्यावृतं मायया स्वतः ॥११॥
सदज्ञातश्च तद्ब्रह्म मेयं कान्ताऽऽदिमानतः ॥
मायावृतितिरोधाने वृत्त्या सत्त्वस्थया क्षणम् ॥१२॥
अतस्तदाविर्भावित्वं मनसि प्रतिपद्यते ॥
किञ्चिन्न्यूनाश्च रसतां याति जाड्यविमिश्रणात् ॥१३॥
इति वेदान्तसिद्धान्तस्थापिना रसतोदिता ॥
साङ्ख्यसिद्धान्तमाश्रित्याप्यधुना प्रतिपद्यते ॥१४॥
तमोरजःसत्त्वगुणा मोहदुःखसुखात्मका ॥
तन्मयी प्रकृतिर्हेतुः, सर्व्वं कार्य्यञ्च तन्मयम् ॥१५॥
त्रिगुणात्मकमेकैकं वस्तु त्र्याकारमीक्ष्यते ॥
निजमानससङ्कल्पभेदेन पुरुषैस्त्रिभिः ॥१६॥
कामिन्याः सुखता भर्त्रा सपत्न्या दुःखरूपता ॥
तदलाभात्तथाऽन्येन मोहत्वमनुभूयते ॥१७॥
एवं सति सुखाकारः प्रविष्टो मानसे यदा ॥
तदा स स्थायिभावत्वं प्रतिपद्य रसो भवेत् ॥१८॥
परमाण्वेकरूपन्तु चित्तं न विषयाकृति ॥
इत्यादिमतमन्येषामप्रामाण्यादुपेक्षितम् ॥१९॥
गृह्णाति विषयाकारं मनो विषययोगतः ॥
इति वेदान्तिभिः साङ्ख्यैरपि सम्यङ् निरूपितम् ॥२०॥
मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ॥
रूपादि व्याप्नुवच्चित्तं तन्निभं जायते ध्रुवम् ॥२१॥

# भक्तिरसायनम् ।



भक्तिसामान्यनिरूपणनामकः

## प्रथम उल्लासः ।

नवरससमिलितं वा केवलं वा पुमर्थ-
परममिह मुकुन्दे भक्तियोगं वदन्ति ॥
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं-
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥१॥
संसाररागेण बलीयसा चिरं निपीडितैस्तत्प्रशमेऽतिशिक्षितम् ॥
इदं भवद्भिर्बहुधा व्ययातिगं निपीयतां भक्तिरसायनं बुधाः ! ॥२॥
द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ॥
सर्वेशे मनसो वृत्तिभक्तिरित्यभिधीयते ॥३॥
चित्तद्रव्यं हि जतुवत् स्वभावात् कठिनात्मकम् ॥
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥४॥
कामक्रोधभयस्नेहहर्षशोकदयाऽऽदयः ॥
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनन्तु तत् ॥५॥
द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ॥
संस्कारवासनाभावभावनाशब्दभागसौ ॥६॥
शिथिलीभावमात्रन्तु मनो गच्छत्यतापकैः ॥
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥७॥
द्रवतायां प्रविष्टं सद् यत् काठिन्यदशां गतम् ॥
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥८॥

लक्षणं भगवद्भक्तेः साधनं सोपपत्तिकम् ॥
सभूमिकं स्वरूपञ्च यथाबुद्धीह वर्णितम् ॥३५॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने स्वरूपभूमिकासाधनसहितभक्तिसामान्यनिरूपणं नाम प्रथम उल्लासः समाप्तः ॥



भक्तिविशेषप्रतिपादको–

## द्वितीय उल्लासः ।

द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा ॥
सा भक्तिरित्यभिहिता विशेषस्त्वधुनोच्यते ॥१॥
चित्तद्रुतेः कारणानां भेदाद्द भक्तिस्तु भिद्यते ॥
तान्युक्तानि तु सत्तेपाद्द व्याख्यायन्तेऽधुना स्फुटम् ॥२॥
कामः शरीरसंबन्धविशेषः स्पृहयालुता ॥
संनिधानासंनिधानभेदेन स भवेद्द् द्विधा ॥३॥
तज्जन्यायां द्रुतौ चित्ते या स्याच्छ्रीकृष्णनिष्ठता ॥
संभोगविप्रयोगाख्या रतिः सा सा क्रमाद्द भवेत् ॥४॥
क्रोध ईर्ष्यानिमित्तं तु चित्ताभिज्वलनं भवेद्द ॥
तज्जन्यायां द्रुतौ सा तु द्वेषशब्देन गृह्यते ॥५॥
अत्र चेतोव्याकुलत्वं सोपद्रावकदर्शनात् ॥
उपद्रावकनाशार्थं तत्प्रीत्यर्थं च तद्द द्विधा ॥६॥
तत्राद्यं द्वेष एव स्याद्द द्वितीयं रतिशद्धभाक् ॥
उपरिष्टात्तदुभयं मया स्पष्टीकरिष्यते ॥७॥
द्वेषादेतुः स्मन्तुरथं वैक्लव्यं चित्तगं तु यत् ॥
तज्जन्यायां द्रुतौ याऽऽस्ते रतिः सा भयमुच्यते ॥८॥

व्यञ्जको वा यथाऽऽलोको व्यङ्ग्यस्याकारतामियात् ॥
सर्व्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥२२॥
भगवत्पूज्यपादानामियमुक्तिः सयुक्तिका ॥
तथा वार्त्तिककारैरप्ययमर्थो निरूपितः ॥२३॥
अतो मांसमयी योषित् का चिदन्या मनोमयी ॥
मांसमय्या अभेदेऽपि भिद्यतेऽत्र मनोमयी ॥२४॥
भार्य्या स्नुषा ननान्दा च याता मातेत्यनेकधा ॥
जामाता श्वशुरः पुत्रः पितेत्यादि पुमानपि ॥२५॥
बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ॥
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥२६॥
एवं स्वभावतो भावस्वरूपमुपवर्णितम् ॥
विशेषेण तु सर्व्वेषां लक्षणं वक्ष्यते पृथक् ॥२७॥
भगवन्तं विभुं नित्यं पूर्णं बोधसुखात्मकम् ॥
यद्गृह्णाति द्रुतं चित्तं किमन्यदवशिष्यते ॥२८॥
कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ॥
उपेक्षाज्ञानमित्याहुस्तद्बुधाः मस्तरादिषु ॥२९॥
काठिन्यं विषये कुर्य्याद् द्रवत्वं भगवत्पदे ॥
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः ॥३०॥
उपायाः प्रथमस्कन्धे नारदेनोपवर्णिताः ॥
सङ्क्षेपात्तानहं वक्ष्ये भूमिभेदविभागतः ॥३१॥
प्रथमं महतां सेवा तद्दयापात्रता ततः ॥
श्रद्धाऽथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥३२॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ॥
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥३३॥
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ॥
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका ॥३४॥

तथा स्वधर्मरक्षाऽर्थं या प्रवृत्तिः प्रयत्नतः ॥
तया चित्तस्य विस्तारो धर्मोत्साहो द्रुतो भवेद् ॥२३॥
वशीकाराख्यवैराग्यं यत् कामास्पृहताऽऽत्मकम् ॥
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥२४॥
इतोऽन्यथा तु चित्तस्य न द्रुतिर्विद्यते क चित् ॥
तदभावात्तु भावो न निरुक्तान्योऽस्ति कश्चन ॥२५॥
यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ॥
स्थायिनो, रसतां यान्ति विभावादिसमाश्रयात् ॥२६॥
धर्मोत्साहो दयोत्साहो जुगुप्सा त्रिविधा शमः ॥
षडप्येतेन विषया भगवद्विषया न हि ॥२७॥
धर्मवीरो दयावीरो बीभत्सः शान्त इत्यमी ॥
अतो न भक्तिरसतां यान्ति भिन्नास्पदत्वतः ॥२८॥
ईर्ष्याजभयजद्वेषौ भगवद्विषयावपि ॥
न भक्तिरसतां यातः साक्षाद्द्रुतिविरोधतः ॥२९॥
शुद्धो रौद्ररसस्तत्र तथा रौद्रभयानकः ॥
नास्वाद्यः सुधिया प्रीतिविरोधेन मनागपि ॥३०॥
कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ॥
उत्साहो यदि दाने च भगवद्विषया अमी ॥३१॥
व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ॥
विभावादिसमायोगे तथा भक्तिरसा अपि ॥३२॥
शृङ्गारः करुणो हास्यस्तथा प्रीतिर्भयानकः ॥
अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः ॥३३॥
शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ॥
भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥३४ ॥
विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ॥
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥३५॥

स्नेहः पुत्रादिविषयः पाल्यपालकलक्षणः ॥
सेव्यसेवकभावोऽन्यः सोऽप्युक्तस्त्रिविधो बुधैः ॥९॥
भगवद्दास्यसख्याभ्यां मिश्रितं चापरं जगुः ॥
या कृष्णाकारता चित्ते तज्जन्यद्रुतिशालिनि ॥१०॥
पाल्यपालकभावेन सा वत्सलरतिर्भवेत् ॥
सेव्यसेवकभावेन प्रेयोरतिरितीर्यते ॥११॥
हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः ॥
एकः परानन्दमयः श्रीशमाहात्म्यकारणम् ॥१२॥
तज्जन्यायां द्रुतौ शुद्धा रतिर्गोविन्दगोचरा ॥
एतदन्तं हि शास्त्रेषु साधनाम्नानमिष्यते ॥१३॥
व्रीडाविकृतवाग्वेषचेष्टाऽऽदिजनितोऽपरः ॥
तज्जन्यायां द्रुतौ चेतोविकासो हास उच्यते ॥१४॥
लोकोत्तरचमत्कारिवस्तुदर्शनजः परः ॥
तज्जन्यायां द्रुतौ चेतोविकासो विस्मयो मतः ॥१५॥
युद्धादितापजनितो वीराणां जायते परः ॥
जितचित्तस्य विस्तारो द्रुतस्योत्साह उच्यते ॥१६॥
इष्टविच्छेदजनितो यश्चित्ते क्लिष्टतोदयः ॥
तज्जन्यायां द्रुतौ विष्टा रतता शोक उच्यते ॥१७॥
दया घृणा स्याद्विषयतुच्छत्वज्ञानदीपिका ॥
तया द्रुते तु मनसि जुगुप्सा जायते त्रिधा ॥१८॥
पूतिव्रणादिविषये कथितोद्वेगिनी बुधैः ॥
श्मशानोत्थपिशाचादिविषया क्षोभिणी भवेत् ॥१९॥
देहेन्द्रियादिदुःखे सविचारणपुरःसरा ॥
घृणा शुद्धेति कविभिः सा जुगुप्सा प्रकीर्तिता ॥२०॥
या तु शोच्यस्य रक्षार्थं प्रवृत्तिरनुकम्पया ॥
तया द्रुते तु मनसि दयोत्साहः स्मृतो बुधैः ॥२१॥
सर्वस्वमपि दास्यामि मार्थयेति च यो महान् ॥
उद्यमो द्रुतचित्तस्य दानोत्साहः स उच्यते ॥२२॥

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ॥
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥४६॥
वर्तमानतनुमात्रं फलं दृष्टमुदाहृतम् ॥
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥५०॥
रजस्तमःप्रचण्डत्वे सुखव्यक्तिरसत्समा ॥
तीव्रवायुविनिक्षिप्तदीपज्वालेव भासते ॥५१॥
तस्मात्स्वयंप्रभाऽऽनन्दाकाराऽपि मतिसंवृतिः ॥
प्रतिबन्धकवशान्न स्यात्सुखव्यक्तिपदास्पदम् ॥५२॥
रजःप्रबलसत्त्वांशादीर्ष्याजद्वेषमिश्रिता ॥
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥५३॥
तमःप्रबलसत्त्वांशाद्भीतिजद्वेषमिश्रिता ॥
मनोवृत्तिः परानन्दे कंसस्य न सुखायते ॥५४॥
तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ॥
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥५५॥
अधुनाऽपि भजन्तो ये द्वेषात् पाशुपतादयः ॥
तेषामप्येवमेव स्यादथ वाऽनेन तुल्यता ॥५६॥
द्रुतौ सत्यां भवेद्भक्तिरद्रुतौ तु न किं चन ॥
चित्ततेद्रुरभावेन वेनस्तु कतमोऽपि न ॥५७॥
रजस्तमोविहीना तु भगवद्विषया मतिः ॥
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥५८॥
स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम् ॥
विरहासहिष्णुताऽऽत्मा प्रीतिविशेषो रतिर्नाम ॥५९॥
रजस्तमःसमुच्छेदतारतम्येन गम्यते ॥
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥६०॥
विरहे यादृशं दुःखं तादृशी दृश्यते रतिः ॥
मृदुमध्याधिमात्रत्वाद्विशेषोऽत्रापि वीक्ष्यते ॥६१॥

शृङ्गारो मिश्रितत्वेऽपि सर्वेभ्यो बलवत्तरः ॥
तीव्रतीव्रतरत्वं तु रतेस्तत्रैव वीच्यते ॥३६॥
के चित् केवलसंकीर्णाः के चित् संकीर्णमिश्रिताः ॥
के चित् केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥३७॥
तत्र केवलसंकीर्णा रौद्रो रौद्रभयानकः ॥
धर्मवीरो दानवीरो बीभत्सः शान्त इत्यपि ॥३८॥
मिश्रा एवान्यविषयाः प्रोक्ताः संकीर्णमिश्रिताः ॥
भगवद्विषयास्ते तु ख्याताः केवलमिश्रिताः ॥३६॥
शुद्धास्त्रयः पुरैवोक्ताः संकीर्य्यन्ते न केन चित् ॥
एवं निरूपिता भक्तिः संक्षेपादुच्यते पुनः ॥४०॥
राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ॥
ईर्ष्याजद्वेषजाऽद्या स्याद्द भयजद्वेषजा परा ॥४१॥
हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ॥
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥४२॥
तत्र ते रतितां नैव यातः सुखविरोधतः ॥
रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती ॥४३॥
भक्तिश्चतुर्विधाऽप्येषा भगवद्विषया स्थिरा ॥
दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत् ॥४४॥
राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ॥
दृष्टदृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥४५॥
शुद्धसत्त्वोद्भवाऽप्येवं साधकेष्वस्मदादिषु ॥
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥४६॥
दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ॥
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥४७॥
रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ॥
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥४८॥

रतिर्देवादिविषया व्यभिचारी तथोर्जितः ॥
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥७५॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात् ॥
तद्योज्यं; परमानन्दरूपे न परमात्मनि ॥७६॥
कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ॥
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥७७॥
परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ॥
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥७८॥
क्रोधशोकभयादीनां साक्षात् सुखविरोधिनाम् ॥
रसत्वमभ्युपगतं तथाऽनुभवमात्रतः ॥७९॥
इहानुभवसिद्धेऽपि सहस्रगुणितो रसः ॥
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥८०॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचिते भगवद्भक्तिरसायने भक्तिविशेषप्रतिपादको नाम द्वितीयोल्लासः

## भक्तिरसप्रतिपादकः
## तृतीय उल्लासः ।

ननु कोऽयं रसो नाम किंनिष्ठो वा भवेदसौ ॥
अस्य प्रत्यायकः को वा प्रतीतिरति कीदृशी ॥१॥
विभावैरनुभावैश्च व्यभिचारिभिरप्युत ॥
स्थायी भावः सुखत्वेन व्यज्यमानो रसः स्मृतः ॥२॥
सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ॥
तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः प्रति ॥३॥
काव्यार्थनिष्ठा रत्याद्याः स्थायिनः सन्ति लौकिकाः ॥
तद्बोद्धृनिष्ठास्त्वपरे तत्समा अप्यलौकिकाः ॥४॥
बोध्यनिष्ठा यथास्वं ते सुखदुःखादिहेतवः ॥
बोद्धृनिष्ठास्तु सर्वेऽपि सुखमात्रैकहेतवः ॥५॥

वैकुण्ठे द्वारकायां च श्रीमद्वृन्दावने तथा ॥
मृदुतीव्रा मध्यतीव्रा तीव्रतीव्रा च सा क्रमात् ॥६२॥
इयं निसर्गसंसर्गौपम्याध्यात्माभियोगजा ॥
संप्रयोगाभिमानाभ्यां समारोपे स्थिता तथा ॥६३॥
स्पर्शे शब्दे तथा रूपे रसे गन्धे च केवले ॥
समुचिते च सा तत्रेत्येकैका षड्विधा भवेत् ॥६४॥
शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ॥
तत्रानुपाधिः शुद्धा स्यात्सोपाधिर्मिश्रितोदिता ॥६५॥
अनुपाधिः परानन्दमहिमैकनिबन्धना ॥
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥६६॥
कामसंबन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥
विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ॥६७॥
शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते.॥
संबन्धजा रतिर्याति पूर्वोक्तां रसतां द्वयोः ॥६८॥
एको वत्सलभक्त्याख्यः प्रेयोभक्तिस्तथाऽपरा ॥
भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥६९॥
एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ॥
तदा तु पानकरसन्यायेन परमो रसः ॥७०॥
एकद्व्यादिरसव्यक्तिभेदाद्रसभिदा भवेत् ॥
तस्मात् क चित्तदभ्यासं कुर्याद्रतिचतुष्टये ॥७१॥
व्रजदेवीषु च स्पष्टं दृष्टं रतिचतुष्टयम् ॥
तच्चित्रालम्बनत्वेन स्वचित्तं तादृशं भवेत् ॥७२॥
रसान्तरविभावादिसंकीर्णा भगवद्रतिः ॥
चित्ररूपवदन्यादृग्रसतां प्रतिपद्यते ॥७३॥
रसान्तरविभावादिराहित्ये तु स्वरूपभाक् ॥
दशमीमेति रसतां सनकादेरिवाधिकाम् ॥७४॥

या रीतियो ये च गुणास्तज्ज्ञानमपि कारणम् ॥
अलंकाराश्च विज्ञाता भवन्ति परिपोषकाः ॥१६।
गुणालंकाररीतीनां भावानां च निवेदकः ॥
तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया ॥२०॥
वृत्तिः कार्याऽपरोक्षाऽस्य शब्दस्य सुखगर्भिणी ॥
दशमस्त्वमसीत्यादिवाक्योत्थमतिवृत्तिवत् ॥२१॥
नित्यं सुखमभिव्यक्तं "रसो वै स" इति श्रुतेः ॥
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥२२॥
कार्यज्ञप्त्यादिवैधर्म्यं यत्तु कैश्चिन्निरूपितम् ॥
तदप्येतेन मार्गेण योज्यं शास्त्राविरोधतः ॥२३॥
परमानन्द आत्मैव रस इत्याहुरागमाः ॥
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः ॥२४॥
अर्थवादाधिकरणे नवशैलादिवर्णनम् ॥
श्रोतॄणां सुखमात्रार्थमिति भट्टैरुदाहृतम् ॥२५॥
कार्यान्वितत्ववादेऽपि न विरोधोऽस्ति कश्चन ॥
यस्मात् कृतीप्सितत्वेन कार्यं सुखमपीष्यते ॥२६॥
अलौकिकनियोगे तु न किंचिन्मानमीक्ष्यते ॥
लोके वार्ता च सर्वेषां तत्परत्वं न युज्यते ॥२७॥
प्रयोजनवदज्ञातज्ञापकत्वं च मानता ॥
शब्दस्य कार्यपरता त्वाचार्यैरेव खण्डिता ॥२८॥
देवताऽधिकृतिन्यायात् पदैरन्यपरैरपि ॥
प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेद् ॥२६॥
तस्मादन्यपरत्वे वा स्वातन्त्र्ये वा पदानि नः ॥
व्यञ्जयन्ति परानन्दं सहकार्यानुरूप्यतः ॥३०॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचिते श्रीभगवद्भक्तिरसायने भक्तिरसप्रतिपादको नाम तृतीयोल्लासः । ग्रन्थश्च सम्पूर्णः ॥

अतो न करुणादीनां रसत्वं प्रतिहन्यते ॥
भावानां बोद्धृनिष्ठानां दुःखाहेतुत्वनिश्चयात् ॥६॥
तत्र लौकिकरत्यादेः कारणं लौकिकं तु यत् ॥
काव्योपदर्शितं तत्तु विभाव इति कथ्यते ॥७॥
लौकिकस्यैव रत्यादेर्लोके यत् कार्यमीक्षितम् ॥
काव्योपदर्शितं तत्स्यादनुभावपदास्पदम् ॥८॥
लौकिकस्यैव रत्यादेर्ये भावाः सहकारिणः ॥
काव्योपदर्शितास्ते तु कथ्यन्ते व्यभिचारिणः ॥९॥
अलौकिकस्य रत्यादेः सामाजिकनिवासिनः ॥
*उद्बोधे कारणं ज्ञेयं त्रयमेतत्समुच्चितम् ॥१०॥*
ज्ञातस्वपरसंबन्धादन्ये साधारणात्मना ॥
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥११॥
भावत्रितयसंसृष्टस्थायिभावावगाहिनी ॥
समूहालम्बनात्मैका जायते सात्त्विकी मतिः ॥१२॥
साऽनन्तरक्षणेऽवश्यं व्यनक्ति सुखमुत्तमम् ॥
तद्द रसः, के चिदाचार्यास्तामेव तु रसं विदुः ॥१३॥
तेषां प्रत्येकविज्ञानं कारणत्वेन तैर्मतम् ॥
स्थायीभावो रस इति प्रयोगस्तूपचारतः ॥१४॥
एवमव्यवधानेन क्रमो यस्मान्न लक्ष्यते ॥
असंलक्ष्यक्रमव्यङ्ग्यं ध्वनिं तस्मादिमं विदुः ॥१५॥
व्यवधानात्क्रमो लक्ष्यो वस्त्वलंकारयोर्ध्वनौ ॥
लक्ष्यव्यङ्ग्यक्रमं तस्माद्द ध्वनिमेतं प्रचक्षते ॥१६॥
रसभावतदाभासभावशान्त्यादिरक्रमः ॥
अनन्तरक्षणे यस्माद्द व्यज्यतेऽवश्यमेव सः ॥१७॥
श्रुतिदुष्टादयो दोषा ये रसप्रतिबन्धकाः ॥
तदभावोऽपि सामग्र्यां निविष्टोऽनिष्टहानिकृत् ॥१८॥

श्रीः

# सटीकभक्तिरसायनस्य शुद्धिपत्रम्—

| पृ० प० अशुद्धयः | पृ० प० शुद्धयः | पृ० प० अशुद्धयः | पृ० प० शुद्धयः |
|---|---|---|---|
| ३-१० नासङ्गा | ३—१० नासङ्गा | ५२-२३ ताया | ५२-२३ तीया |
| ४-२२ शिपा | ४—२२ शिपो | ५७—७ लिता | ५७—७ लितो |
| ५-१४ दर्शं | ५—१४ दर्शं | ६८-२१ कर्त्त | ६०-२१ कर्त्तुं |
| ५-२१ दाय | ५—२१ दीय | ६७-२१, ३७ | ६७-२१, ३५ |
| ६-१८ निदशः | ६—१८ निर्देशः | ६९—७ व्राज | ६९—७ व्राज |
| ७-१५ ह्राणि | ७—१५ ह्राणि | ६९-११ विपरी | ६९-११ विवरी |
| १४—४ भक्ति | १४—४ भक्ति- | ६९-१६ सस | ६९-१६ पञ्च |
| योगस्य | योगस्य | ७६-२३ प्रेया | ७६-२३ प्रेयो |
| १४-१२ चित्त | १४-१२ चित्त | ८४—१ धम | ८४—१ धर्म |
| १५—६ शिथि | १५—६ शिथि | ८६-१४ तन्न | ८६-१४ तन्नू |
| १५-११ लक्ष्य | १५-११ लक्ष | ८७—२ तुल | ८७—२ तुपल |
| १५—६ न्नत | १५—६ न्नतु | ८५—१ साहू | ८९—१ साह्व |
| १७—३ घृना | १७—३ घृता | १०१-२३ सखा | १०१-२३ सुखा |
| १७-२० वमा | १९-२० वमा | १०२—५ हरेवै | १०२—५ हरेवैं |
| २२-१४, १९ | २२-१४, १७ | १०९-१८ अन | १०९-१८ अनु |
| २३-१६ वद्ध | २३-१६ वद्धू | ११६-२४ वण्य | ११६-२४ वर्ण्य |
| २३-१८ वत्येव | २३-१८ वह्निरेव | ११७—७ गान्धत्र | ११७—७ गान्धर्व |
| भूतार | भूतैरार | १७-२१ वय | ११७-२१ वर्य |
| २३-२१ पट | २३-२१ पट | ११८-१६ पुष्प | ११८-१६ पुष्प |
| २०-२४ द्रव्यचक्षुव | २३-२४ द्रव्यं | ११९-१५ भ्रनम | ११९-१५ भ्रम |
| | चक्षुर्व | १२१—४ न | १२१—४ नि |
| २७—४ पूर्ण | २७—४ पूर्ण | १२३-१२ सागा | १२३-१२ सौभा |
| २७-१३ प्रसरा | २७-१३ प्रस्तरा | १४१—८ वर्त | १४१—८ वर्त्तुं |
| ३७-२५ पद्देव | ३७-२५ पाद्देव | १४२-१७ स्वम् | १४२-१७ स्वमु |
| ४९-२५ मन्रे | ४९-२५ मान्रे | १४४-१८ धोन | १४४-१८ धोनु |
| ५०-२३ एहराः | ५०-२३ एहराः | | |

अत्र १३५ पृष्ठे—नवमी पङ्क्तिः सप्तमपङ्क्तिस्थाने; तथा षोडशीसप्तदश्यौ पङ्क्ती चतुर्दशीपञ्चदश्योः पङ्क्त्योः स्थाने पठनीयाः ।

इति ।

# आह्वानम्

आह्वयामि महामान्यानाचार्यान् विबुधान् गुरून् ।
सत्यसंधान् धर्मशीलान् सर्वभूतहिते रतान् ॥
आगच्छन्तु महाभागाः विद्याव्रत तपोऽन्विताः ।
ज्ञातारो धर्मशास्त्राणां धर्मवृद्धिमभीप्सवः ॥
आलोड्य सर्वशास्त्राणि शान्त्या विमलया धिया ।
उद्बोधयन्तु तं धर्मं यः सत्यः लोक शङ्करः ॥

---



# सनातनधर्म प्रदीपकः (२)

## मंत्र महिमा

सत्याधारः ज्ञानतैलः श्रद्धावर्तिसमन्वितः ।
प्रदीपकः भक्तिशिखः धर्म्यं मार्गं प्रदर्शयेत् ॥



मदनमोहन मालवीय

स्वीकृत हुआ था। किन्तु मैंने उसी समय सूचना दे दी थी कि मेरा दृढ़ निश्चय है कि ब्राह्मण से लेकर चाण्डाल पर्यंत सब जाति के पुरुष और स्त्रियों को समान रीति से ॐकार युक्त अष्टाक्षर मंत्र का और ॐकार युक्त षडक्षर मंत्र का ( जो पञ्चाक्षर मंत्र के नाम से प्रसिद्ध है ) उपदेश करना सर्वथा शास्त्र सम्मत है और मैं इस बात का पूरा प्रमाण छाप कर विद्वानों की सेवा में भेजूंगा और उसके उपरान्त सनातनधर्म महासभा के दूसरे अधिवेशन में प्रार्थना करूंगा कि इस बात पर फिर विचार कर अन्तिम निर्णय किया जाय। उसी प्रतिज्ञा की पूर्ति में मैं यह छोटा निबंध प्रकाशित करता हूँ॥

## वेद सब धर्मों का मूल है

जैसा महाभारत में लिखा है

सत्य से बड़ा कोई धर्म नहीं। झूठ से बड़ा कोई पाप नहीं।
वेद से बड़ा कोई शास्त्र नहीं। माता के समान कोई गुरू नहीं॥

यह बात सभी विद्वान् जानते हैं कि पृथ्वी मण्डल पर वेद के समान प्राचीन कोई ग्रन्थ नहीं है। हमारे विश्वासके अनुसार वेद सब धर्मों का मूल है और वह जगत के समस्त प्राणियों के हित के लिये है। यह विदित है कि वेद की चारो संहिताओं में एक २ अक्षर के उच्चारण करने के उदात्त अनुदात्त स्वरित स्वर नियत हैं। प्राचीन मर्यादा के अनुसार विधिपूर्वक ब्रह्मचर्य के साथ शिक्षा कल्प व्याकरण निरुक्त छन्द और ज्योतिष इन छः अंगों के साथ स्वर संयुक्त वेद उन्हीं द्विजाति बालकों को पढ़ाया जाता था जिनका शास्त्र रीतिसे उपनयन संस्कार किया जाता था और जिनको कठोर नियमों का पालन कराया जाता था। और न केवल शूद्रों को किन्तु ब्राह्मण क्षत्रिय वैश्य कन्याओं को भी 'अविद्यत्वात्' विद्या न जानने के कारण वेद नहीं पढ़ाया जाता था। किन्तु ऋषियों को यह इष्ट था कि सब प्राणियों को वेद के उपदेश का लाभ प्राप्त हो। इसलिये ऋषियों ने वेदों का अर्थ पुराणों में प्रकाश करना अपना कर्तव्य समझा और महर्षि वेद व्यास जो ने लोक के हित के लिये एक वेद को ऋग् यजुः साम अथर्व नाम चार विभाग में बाँट-कर पीछे वेद का अर्थ अपने समय की लोक भाषा संस्कृत में श्रीमन्महाभारत में सब प्राणियोंके हित के लिये, और विशेष कर

त्वदीयं वस्तु गोविन्द
तुभ्यमेव समर्पये

कि मैंने व्रत लेकर महाभारत के नाम से वेद का अर्थ भी प्रकाश कर दिया जिसमें स्त्री शूद्रादि भी सब लोग धर्म अर्थ काम मोक्ष चारों पदार्थों का उपदेश प्राप्त कर सकते हैं ( देखिये ४, ५ पन्ने में )। महाभारत में, भागवत में, विष्णुपुराण में, शिवपुराण में तथा अन्य पुराणों में वेद का अर्थ विपुलता के साथ लिखा गया है॥

## इतिहास पुराण वेद के समान हैं

इसी कारण वाल्मीकीय रामायण और महाभारत तथा भागवत आदि पुराणों को पाँचवा वेद भी कहते हैं।

छान्दोग्य उपनिषद् में लिखा है—

ऋग्वेद यजुर्वेद सामवेद चौथा आथर्वण वेद और इतिहास पुराण पाँचवाँ वेद है।

भागवत में भी लिखा है—

इतिहास पुराण को पाँचवा वेद कहते हैं।

महाभारत के विषय में उसी में ऋषियों का वचन है कि यह कृष्णद्वैपायन व्यास रचित वेद है और उन्होंने इसको 'नाना शास्त्रोपबृंहिता' 'वेदैश्चतुर्भिः संयुक्ता' 'पुण्या' 'पापभयापहा' 'ब्राह्मी संहिता' अर्थात् अनेक शास्त्रों से बढ़ाई गई, चारों वेदों के अर्थ से युक्त, पुण्य बढ़ाने वाली, पाप और भय को दूर करने वाली, ब्राह्मी ( वेद की ) संहिता कह कर वर्णन किया है।

इसी प्रकार से भागवत के विषय में लिखा है कि उसमें 'श्लोके श्लोके पदे पदे' वेद का अर्थ भरा है॥

ऊपर कह चुके हैं कि इतिहास पुराण चारों वर्णों के हित के लिये रचे गये। ऐसाही भविष्य पुराण में लिखा है।

चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे।
धर्म शास्त्राणि राजेन्द्र शृणुतानि नृपोत्तम॥
अष्टादश पुराणानि चरितं राघवस्य च।
रामस्य कुरु शार्दूल धर्म कामार्थ सिद्धये॥
तथोक्तं भारतं वीर पाराशर्येण धीमता।
वेदार्थं सकलं योज्य धर्म शास्त्राणि च प्रभो॥

# आह्वानम्

आह्वयामि महामान्यानाचार्यान् विबुधान् गुरून् ।
सत्यसंधान् धर्मशीलान् सर्वभूतहिते रतान् ॥
आगच्छन्तु महाभागाः विद्याव्रत तपोऽन्विताः ।
ज्ञातारो धर्मशास्त्राणां धर्मवृद्धिमभीप्सवः ॥
आलोड्य सर्वशास्त्राणि शान्त्या विमलया धिया ।
उद्बोधयन्तु तं धर्म यः सत्यः लोक शङ्करः ॥

महाभारत के शान्तिपर्व में विष्णु सहस्रनाम के अन्त में स्पष्ट कह दिया है कि जो मनुष्य इसको सुने और जो इसका पाठ करे उसका इस लोक में और परलोक में भी कोई अमंगल नहीं होगा।

ब्राह्मण सुने या पढ़े तो वेदान्त का जानने वाला हो।

क्षत्रिय सुने या पढ़े तो विजयी हो।

वैश्य सुने या पढ़े तो धनसंपन्न हो।

शूद्र भी सुने या पढ़े तो सुख पावे। ( देखिये पन्ना १० )

भगवद्गीता के अन्त में भगवान ने अपने श्रीमुख से अर्जुन से कहा है कि जो कोई मुझ में भक्ति कर मेरे भक्तों के बीच में इसको सुनावेगा और जो कोई मेरे और तुम्हारे इस धर्मयुक्त संवाद को पढ़ेगा उसने ज्ञान यज्ञ से मेरी पूजा की, ऐसा मैं मानता हूँ।

भगवद्गीता के माहात्म्य में भी लिखा है कि इस गीता शास्त्र को जो कोई पुरुष पवित्र हो कर पढ़ेगा वह भय और शोक से रहित हो कर विष्णु के पद को पहुँचेगा।

भीष्मस्तवराज के अन्त में लिखा है कि जो इस स्तोत्र को पढ़ेगा या सुनेगा वह सब पाप से मुक्त हो कर देह त्याग करने पर विष्णु भगवान में मिल जायगा ( देखिये पन्ना ११ )

अनुशासन पर्व के शिव सहस्रनाम के अन्त में भगवान कृष्ण का वचन है कि जो इंद्रियों को वश में रख पवित्र हो कर बिना व्रतभंग नियम से एक महीना इस स्तोत्र का पाठ करेगा वह अश्वमेध यज्ञ का फल पावेगा।

ब्राह्मण करे तो सब वेदों का ज्ञान पावे।

क्षत्रिय करे तो पृथ्वी को जीते।

वैश्य करे तो लाभ और निपुणाई पावे।

शूद्र करे तो यहां सुख और परलोक में सुगति पावे।

श्रीमद्भागवत में लिखा है—

ब्राह्मण भागवत पढ़े तो बुद्धि पावे।

क्षत्रिय पढ़े तो सागर पर्यंत पृथ्वी पावे।

वैश्य पढ़े तो बहुत धन पावे।

शूद्र पढ़े तो पाप से शुद्ध हो जाय ( देखिये पन्ना १३ )

इसी प्रकार से विष्णु पुराण, नारदीय पुराण, शिव पुराण, स्कंद पुराण, मार्कण्डेय पुराण, वायु पुराण, ब्रह्मपुराण, अग्नि पुराण,

का विवाह उनका बारहवाँ वर्ष आरंभ होने से पहले कदापि न किया जाय।

प्रस्ताव ८

इस सनातनधर्म महासभा की संमति में जाति के बल और धर्म की वृद्धि के लिए यह अत्यन्त आवश्यक है कि विवाह संस्कार हो जाने पर भी स्त्रियों का पति-समागम १६ वर्ष के पूर्व न हो।

---

मेरा निवेदन।

## नित्य की उपासना

ध्येयः सदा सवितृ मंडल मध्यवर्ती
नारायणः सरसिजासन संनिविष्टः।

प्रतिदिन सूर्य के उदय और अस्त होने के समय प्रत्येक पुरुष और स्त्री को प्रातःकाल स्नान कर और सायंकाल हाथ मुंह पैर धोकर सूर्य के सामने खड़े होकर सूर्य मण्डल में विराजमान सारे जगत के प्राणियों के आधार परब्रह्म नारायण को **ॐ नमोनारायणाय** इस मंत्र से अर्घ देकर और जल न मिले तो यौंहीं हाथ जोड़ कर मन को पवित्र और एकाग्र कर श्रद्धा भक्तिपूर्वक १०८ वार या २८ वार या कम से कम १० वार प्रातःकाल **ॐ नमोनारायणाय** इस मन्त्र को और सायंकाल **ॐ नमः शिवाय** इस मंत्र को जपना चाहिये और जप के उपरान्त परमात्मा का ध्यान कर नीचे लिखी प्रार्थना करनी चाहिये।

### ॐ नमो नारायणाय।

सब देवन के देव प्रभु सब जग के आधार।
दृढ़ राखौ मोहि धर्म में विनवौं वारंवार॥
चन्दा सूरज तुम रचे रचे सकल संसार।
दृढ़ राखौ मोहि सत्य में विनवौं वारंवार॥
घट घट तुम प्रभु एक अज अविनाशी अविकार।
अभय दान मोहि दीजिये विनवौं वारंवार॥

विस्तार करें। जगत से अज्ञान को दूर करें, अन्याय और अत्याचार को रोकें, और सत्य, न्याय और दया का प्रचार कर मनुष्यों मे परस्पर प्रीति, सुख और शान्ति बढावें।

यह कलियुग है। इसके दोष प्रसिद्ध हैं। इसका गुण यह है कि जो सतयुग मे तप से होता था, त्रेता मे ज्ञान से, द्वापर में यज्ञ से, वह कलियुग में केवल भगवद्भक्ति से होता है।

नारदजी ने भक्ति से कहा था कि—

'कलियुग के समान कोई युग नहीं है। इस कलियुग में मैं तुझ को (भक्ति को) घर घर में और प्राणी प्राणी में स्थापन करूंगा। और २ धर्मों को अलग रख और महोत्सवों को आगे रख जो मैं तुझ को घर घर में न बिठा दू तो मैं भगवान का दास नहीं। इस कलियुग में जिन प्राणियों के हृदय में भक्ति तू होगी, वे यदि पापी भी होंगे तो भी निडर हो कर विष्णु के मन्दिर में जावेंगे'।

मैं आशा करता हूँ कि जो कुछ इस पुस्तक में निवेदन किया गया है, उससे सब निष्पक्षपात विद्वानों को यह निश्चय हो जायगा कि प्रणवसहित अष्टाक्षर मन्त्र और प्रणवसहित षडक्षर मन्त्र (जिसको पञ्चाक्षर भी कहते हैं) ब्राह्मण से लेकर चाण्डाल पर्यन्त सब के लिये विहित हैं। यदि ऐसा है तो मेरी प्रार्थना है कि सनातन धर्म की रक्षा और प्रचार चाहने वाले समस्त सत्पुरुष मिलकर भक्त शिरोमणि लोकसुहृद नारदजी की प्रतिज्ञा को पूर्ण करने का पूरा प्रयत्न करें। जो लोग वैदिक दीक्षा पा चुके हैं उनको भी इन सार्वजनीन मन्त्रों का जप करना चाहिये और प्रत्येक हिन्दू सन्तान को इन परम कल्याण कारी मन्त्रों की दीक्षा लेकर तथा अपने और सब भाई और बहिनों को देकर या दिलाकर अपना और उनका धार्मिक जीवन पवित्र और प्रकाशमय करना चाहिये, जिससे धर्म में उनकी श्रद्धा बढ़े और दृढ़ रहे वे अपने देश और समाज में सुख सम्मान और स्वतन्त्रता से रहें तथा दिन दिन ऊपर उठें और संसार के अन्य मतों के मानने वाली जातियों की दृष्टि में भी आदर के योग्य हों। इससे हमारा आत्मा भी प्रसन्न होगा और सारे जगत का पिता, सब का सुहृद, सब को शरण देने वाला, घट घट व्यापी परमात्मा भी प्रसन्न होगा॥

मदनमोहन मालवीय।

होय पुत्र प्रभु राम सम अथवा कृष्ण समान।
वीर धीर बुध धर्म दृढ जगहित करै महान ॥
जो पै पुत्री होय तो सीता सती समान।
अथवा सावित्री सदृश धर्म शक्ति गुन खान ॥
रक्षा होवै धर्म की बढ़ै जाति को मान।
देश पूर्ण गौरव लहै जय भारत सन्तान ॥
मैं दुर्बल अति दीन प्रभु पै तुव शक्ति अपार।
हरहु अशुभ शुभ दृढ़ करहु विनवहुँ वारंवार ॥

---

## जन्मसंस्कार

संतान का जन्म होते ही नालछेदन के पहिले हर एक बच्चे के एक एक कान में तीन तीन बार परमात्मा का सबसे उत्तम नाम 'राम' इस महामन्त्रको कहकर उसको नीचे लिखे श्लोक या दोहों से आशीर्वाद देना चाहिये और जब तक बच्चा स्वयं राम राम कहने न लगे तब तक माता को नित्य एक बार ऐसाही करना चाहिये।

### श्लोक

रमते सर्वभूतेषु स्थावरेषु चरेषु च।
अन्तरात्म स्वरूपेण यो हि रामः प्रकीर्त्यते ॥
तस्यैवांशाऽसि जीव त्वं सच्चिदानन्दरूपिणः।
देहे निरामये दीर्घे वस धर्मे दृढ़ो भव ॥

### दोहा

थावर जंगम जीव में घट घट रमता राम।
सत चित आनँद घन प्रभू सब विधि पूरण काम ॥
अंश उसी के जीव हो करो उसी से नेह।
सदा रहो दृढ़ धर्म चिर बसो निरामय देह ॥

( राम मन्त्र की महिमा पन्ने ९८ से १०६ तक में देखिये )

श्रीकृष्णार्पणमस्तु

४—मन्दिर, मठ, तीर्थ, धर्मशाला आदि धर्मस्थानों की रक्षा और सुप्रबन्ध के उपाय करना।

५—अनाथ विधवा और गौ की रक्षा के उपाय करना।

६—जहाँ और जब आवश्यकता हो सनातनधर्म और समाज के हित की रक्षा करना।

७—सनातनधर्म के विशेष कार्य के अतिरिक्त हिन्दू जाति के सर्वसाधारण हित के कामों में और सब हिन्दुओं के साथ मिल कर काम करना।

८—देश में धर्म सम्बन्धी तितिक्षा बढ़ाना और भिन्न भिन्न धर्मों के मानने वाले भाइयों में परस्पर प्रीति और सद्भाव बढ़ाना।

( ख ) इस महासभा की समति में पंजाब की तरह हर प्रान्त में सनातनधर्म प्रतिनिधि सभा के नाम से एक प्रान्तीय संस्था की स्थापना आवश्यक है। यह महासभा सनातनधर्म से प्रेम रखने वाले सज्जनों से अनुरोध करती है कि वे सनातनधर्म महासभा के नियमों के अनुसार अपने अपने प्रान्त में सनातनधर्म की प्रांतीय संस्था स्थापित करने और प्रांतीय कार्यालय खोले जाने का शीघ्र से शीघ्र प्रबन्ध करें।

( ग ) यह महासभा निर्णय करती है कि सनातनधर्म सङ्गठन के काम को नियम पूर्वक चलाने के लिये काशी में सनातनधर्म महासभा का प्रधान कार्यालय खोला जाय और उसका एक शाखा-कार्यालय दिल्ली मे खोला जाय।

( घ ) यह महासभा अपनी कार्यकारिणी समिति को अधिकार देती है कि वह देश में धर्म के प्रचार और सगठन के लिये इस समय कम से कम ५० योग्य उपदेशक और भजनीक नियुक्त करे।

## प्रस्ताव २

यह महासभा सनातनधर्म सभाओं का आदेश करती है कि वे इस बात का प्रयत्न और प्रबंध करें कि समस्त द्विज बालकों का जातकर्म संस्कार वैदिक रीति से ठीक समय पर किया जाय और हिन्दू सन्तान मात्र का उत्पन्न होते ही ( नाल छेदन से पहले )

## वेद महिमा

तत्र मनुः—

वेदोऽखिलोधर्ममूलं स्मृतिशीलेच तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥
श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥
पितृ देव मनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाऽ प्रमेयञ्च वेद शास्त्रमिति स्थितिः॥
चातुर्वर्ण्यं त्र्योलोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति॥
बिभर्ति सर्वभूतानि वेद शास्त्रं सनातनम्।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्॥
सेनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यञ्च वेद शास्त्रविदर्हति॥

**अतः सर्वैर्द्विजैर्वेदा अवश्यमेवाध्येतव्याः**

तथा च मनुः

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशुगच्छति सान्वयः॥
नाभिव्याहारयेद् ब्रह्म स्वधा निनयनादृते॥
स शूद्रेण समस्तावद् यावद्वेदे न जायते॥
कृतोपनयनस्यास्य व्रतादेशनमिष्यते।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधि पूर्वकम्॥
षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिक पादिकं वा ग्रहणान्तिकमेव वा॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुत ब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥

**तथा च योगि याज्ञवल्क्यः**

न वेदशास्त्रादन्यत्तु किञ्चिच्छास्त्रं हि विद्यते।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात्॥

का विवाह उनका बारहवाँ वर्ष आरंभ होने से पहले कदापि न किया जाय।

प्रस्ताव ८

इस सनातनधर्म महासभा की संमति में जाति के बल और धर्म की वृद्धि के लिए यह अत्यन्त आवश्यक है कि विवाह संस्कार हो जाने पर भी स्त्रियों का पति समागम १६ वर्ष के पूर्व न हो।

---

मेरा निवेदन।

## नित्य की उपासना

ध्येयः सदा सवितृ मंडल मध्यवर्ती
नारायणः सरसिजासन संनिविष्टः।

प्रतिदिन सूर्य के उदय और अस्त होने के समय प्रत्यक पुरुष और स्त्री को प्रात काल स्नान कर और सायकाल हाथ मुह पैर धोकर सूर्य के सामने खडे होकर सूर्य मण्डल में विराजमान सारे जगत के प्राणियों के आधार परब्रह्म नारायण को **ॐ नमोनारायणाय** इस मत्र से अर्घ देकर और जल न मिले तो यौंहीं हाथ जोड कर मन को पवित्र और एकाग्र कर श्रद्धा भक्तिपूर्वक १०८ वार या २८ वार या कम से कम १० वार प्रात काल **ॐ नमोनारायणाय** इस मन्त्र को और सायकाल **ॐ नमः शिवाय** इस मत्र को जपना चाहिये और जप के उपरान्त परमात्मा का ध्यान कर नीचे लिखी प्रार्थना करनी चाहिये।

## ॐ नमो नारायणाय।

सब देवन के देव प्रभु सब जग के आधार।
दृढ़ राखौ मोहि धर्म में विनवौं बारंबार॥
चन्दा सूरज तुम रचे रचे सकल ससार।
दृढ़ राखौ मोहि सत्य में विनवौं बारंबार॥
घट घट तुम प्रभु एक अज अविनाशी अविकार।
अभय दान मोहि दीजिये विनवौं बारबार॥

धिकारः। द्विजबालानां संख्यापेक्षया द्विजस्त्रीणां तथा द्विजेतरेषां संमिलिता संख्या च महत्तरा। अतः

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्॥

इत्युक्तलक्षणया प्राणिमात्रदुःखध्वंसनतत्परया दयया परीतः सर्वभूतहितेरतो महाकारुणिको मुनिः सर्वेषां हिताय महाभारतमरचयत्

## तथाहि महाभारते आदि पर्वणि—

तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम्।
इतिहासमिमं चक्रे पुण्यं सत्यवती सुतः॥
लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत्॥
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः।
भारताध्ययनं पुण्यमपि पादमधीयत.।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः॥
देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमला.।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षा महोरगाः॥
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च।
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्॥
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः।
असत्सत्सदसच्चैव यस्माद्विश्वं प्रवर्त्तते॥
सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः।
अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम्॥
अव्यक्तादि परं यच्च स एव परिगीयते॥
यं ध्यायन्ति सदा मुक्ता ध्यानयोगबलान्विताः।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम्॥
श्रद्दधानः सदायुक्तः सदा धर्मपरायणः।
आसेवन्निममध्यायं नरः पापात्प्रमुच्यते॥
अनुक्रमणिकाध्यायं भारतस्येममादितः।
आस्तिकः सततं शृण्वन् न कृच्छ्रेष्ववसीदति॥

होय पुत्र प्रभु राम सम अथवा कृष्ण समान।
वीर धीर बुध धर्म दृढ जगहित करै महान॥
जो पै पुत्री होय तो सीता सती समान।
अथवा सावित्री सदृश धर्म शक्ति गुन खान॥
रक्षा होवै धर्म की बढ़ै जाति को मान।
देश पूर्ण गौरव लहै जय भारत सन्तान॥
मैं दुर्बल अति दीन प्रभु पै तुव शक्ति अपार।
हरहु अशुभ शुभ दृढ करहु विनवहुँ वारवार॥

---

## जन्मसंस्कार

संतान का जन्म होते ही नालछेदन के पहिले हर एक बच्चे के एक एक कान में तीन तीन वार परमात्मा का सबसे उत्तम नाम 'राम' इस महामन्त्रको कहकर उसको नीचे लिखे श्लोक या दोहों से आशीर्वाद देना चाहिये और जब तक बच्चा स्वयं राम राम कहने न लगे तब तक माता को नित्य एक वार ऐसाही करना चाहिये।

### श्लोक

रमते सर्वभूतेषु स्थावरेषु चरेषु च।
अन्तरात्म स्वरूपेण यो हि राम' प्रकीर्त्यते॥
तस्यैवांशोऽसि जीव त्वं सच्चिदानन्दरूपिणः।
देहे निरामये दीर्घे वस धर्मे दृढ़ो भव॥

### दोहा

थावर जंगम जीव में घट घट रमता राम।
सत चित आनँद घन प्रभू सब विधि पूरण काम॥
अंश उसी के जीव हो करो उसी से नेह।
सदा रहो दृढ़ धर्म चिर बसो निरामय देह॥

( राम मन्त्र की महिमा पन्ने ६८ से १०६ तक में देखिये )

श्रीकृष्णार्पणमस्तु



इतिहास प्रदीपेन मोहावरण घातिना।
लोक गर्भ गृहं कृत्स्नं यथावत्सं प्रकाशितम्॥

## इतिहासपुराणानि वेदसंमितानि

तत्र छान्दोग्ये—

ऋग्वेदो यजुर्वेदः सामवेद आथर्वण-
श्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः।

तथा च भागवते—

इतिहासपुराणं च पञ्चमो वेद उच्यते॥

भविष्ये च—

कार्ष्णं च पंचमं वेदो यन्महाभारतं स्मृतम्।

भारते ऋषीणां वचनम्।

द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा।
सुरैर्ब्रह्मादिभिश्चैव श्रुत्वा यदभिपूजितम्॥
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः।
सूक्ष्मार्थ न्याय युक्तस्य वेदार्थैर्भूषितस्य च॥
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम्॥
वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्मणः।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम्॥

तथा च रामायणे—

इदं पवित्र पापघ्नं पुण्यं वेदैश्च संमितम्।
यः पठेद्रामचरितं सर्व पापैः प्रमुच्यते॥

तथा च पद्मपुराणे भागवतमाहात्म्ये—

नारदउवाच—

वेद वेदान्त घोषैश्च गीतापाठैः प्रबोधितम्।
भक्ति ज्ञान विरागाणां नोदतिष्ठत् त्रिकं महत्॥
श्रीमद्भागवतालापात् तत् कथं बोधमेष्यति।
तत्कथासु तु वेदार्थः श्लोके श्लोके पदे पदे॥

कुमारा ऊचुः—

वेदोपनिषदां साराज्जाता भागवती कथा।
अत्युत्तमा ततो भाति पृथग्भूता फलाकृतिः॥

# सनातन धर्म प्रदीपकः

## ॐ नमो भगवते वासुदेवाय

यं सुरासुर गंधर्वाः सिद्धा ऋषि महोरगाः।
प्रयता नित्यमर्चन्ति परमं दुःखभेषजम् ॥
अनादि निधनं देवमात्मयोनिं सनातनम्।
अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् ॥
यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम्।
वदन्ति जगतोऽध्यक्षममरं परमं पदम् ॥
महतस्तमसः पारे पुरुषं ह्यतितेजसम्।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥
यस्तनोति सतां सेतुमृतेनाऽमृतयोनिना।
धर्मार्थ व्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥
यं पृथग् धर्मचरणाः पृथग् धर्म फलैषिणः।
पृथग् धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥
अकुण्ठं सर्वकार्येषु धर्मकार्यार्थमुद्यतम्।
वैकुण्ठस्य च तद्रूपं तस्मै कार्यात्मने नमः ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्या तीर्थं महेश्वरम् ॥
नमो धर्माय महते नमः कृष्णाय वेधसे।
ब्राह्मणेभ्यो नमस्कृत्य वृणे धर्मे दृढां मतिम् ॥

## अथातो धर्म जिज्ञासा

तत्र भारते

सत्यान्नास्ति परो धर्मो नानृतात्पातकं परम्।
न च वेदात्परं शास्त्रं नास्ति मातृ समो गुरुः ॥

मोक्षमिच्छेत्सदा देवि सर्वथानन्ददायकम् ॥
अध्येतव्यानि पौराणं शास्त्रं तच्छ्रूयते सदा।
पापं संक्षीयते नित्यं धर्मश्चैव विवर्धते।
क्रमाज् ज्ञानफलावाप्ति र्न संसारं प्रपद्यते॥
अत एव पुराणानि श्रोतव्यानि प्रयत्नतः।
धर्मार्थ काम लाभाय मोक्ष मार्गाप्तये तथा॥
यज्ञैर्दानैस्तपोभिस्तु यत्फलं तीर्थसेवया।
तत्फल समवाप्नोति पुराणश्रवणान्नरः॥
न भवेयुः पुराणानि धर्ममार्गेक्षणानि तु।
यद्यत्र पद्धती स्यातामिह पारत्रकी कथम्॥

वेदेन दृष्टो जगतां हि मार्गः
पौराणधर्मो हि सदा वरिष्ठः।
शास्त्रं विना सर्वमिदं विभाति
सूर्येण हीनस्त्विह जीवलोकः॥

षट्त्रिंशतः पुराणानामत एकं शृणोति यः।
पठेद्वा भक्ति युक्तस्तु शृणु तस्यापि यत्फलम्॥
अरण्ये योऽप्यधीयानश्चातुर्विधं फलं लभेत्।
यज्ञैर्दानैस्तपोभिस्तु देवि तत्पठनादतः॥
एतच्च कथितं देवि सुधावाप्तिफलं हि तत्।
धर्मशास्त्रं हि श्रोतव्यं सर्वधर्मफलप्रदम्॥

अतएव महर्षिणा व्यासेनोक्तम्—

इतिहास पुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति।
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते॥
अतो हि—

श्रुति स्मृति पुराण प्रतिपादितो धर्मः सनातनो धर्मः।

तथा च याज्ञवल्क्यः—

पुराण न्याय मीमांसा धर्मशास्त्रांगमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति।

---

दुर्बोधं तु भवेद्यस्मादध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ॥

कृतयुगे त्रेतायाञ्च अनन्त एव वेदस्य शब्द विस्तर आसीत् 'अनन्ता वै वेदाः' इति श्रुतिः, । 'आद्यो वेदश्चतुष्पादः शत साहस्र संमितः' इति विष्णुपुराणे । "आद्यो वेदः वेदविभागात्पूर्व-कालिको वेदः चतुष्पादः ऋग्वेदादि चतुष्टय समूहरूपः शतसाहस्र संमितः—अनन्त संख्याक" इति तत्र महिदास कृता व्याख्या । ततः

## वेदविभागः

द्वापरे समनु प्राप्ते तृतीये युग पर्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ॥
स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचि ।
विविक्तदेश आसीन उदिते रविमण्डले ॥
परावरज्ञः स ऋषिः कालेनाव्यक्त रंहसा ।
युगधर्म व्यतिकरं प्राप्तं भुवि युगे युगे ॥
भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ।
अश्रद्दधानान् निःसत्वान् दुर्मेधान् ह्रसितायुषः ॥
दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्व वर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥
चातुर्होत्रं कर्म शुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद्यज्ञ संतत्यै वेदमेकं चतुर्विधम् ॥
ऋग् यजुः सामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
त एव वेदा दुर्मेधै र्धार्यन्ते पुरुषैर्यथा ।
एवं चकार भगवान् व्यासः कृपणवत्सलः ॥
चक्रे वेद तरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥

भागवते

## इतिहासपुराणानामावश्यकता

पूर्वोद्धृत मनुवचनाऽनुसारेण वेदाध्ययने उपनीतानां ब्राह्मण-क्षत्रिय वश्य बालकानामेवाधिकारो स्त्रीणां तथा शूद्राणां नास्ति

एतदाख्यानमायुष्यं पठन् रामायणं नरः।
स पुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते॥
पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात्।
वणिग् जनः पण्यफलत्वमीयात्
जनश्च शूद्रोऽपि महत्वमीयात्॥

## रामायणे अन्ते च

इद माख्यान मायुष्य सौभाग्यं पापनाशनं।
रामायणं वेद समं श्राद्धेषु श्रावयेद् बुधः॥
अपुत्रो लभते पुत्र मधनो लभते धनम।
सर्व पापैः प्रमुच्येत पादमप्यस्य यः पठेत्॥
एतदाख्यान मायुष्यं पठन् रामायण नरः।
सपुत्र पौत्रो लोके स्मिन् प्रेत्य चेह महीयते॥

## तथा महाभारते आदिपर्वणि—

य इमं शुचिरध्यायं पठेत् पर्वणि पर्वणि।
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः॥
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धा समन्वितः।
स दीर्घमायुः कीर्तिञ्च स्वर्गतिं चाप्नुयान्नर॥

## तथैव स्वर्गारोहण पर्वणि—

इदं भारतमाख्यान यः पठेत् सुसमाहितः।
स गच्छेत् परमां सिद्धिमिति मे नास्ति संशयः॥

यः पठेत् स गच्छेत्परमां सिद्धिम् इति वचनेन सर्वेषां नराणां नारीणां च भारतस्याऽध्ययनेऽधिकारः सूचितः। एष यथार्थः

## शांतिपर्वणि विष्णुसहस्रनामान्ते विस्पष्टीकृतः।

तद्यथा—

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्।
नाऽशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः॥

उभे सन्ध्ये जपन् किंचित् सद्यो मुच्येत किल्बिषात् ।
अनुक्रमण्या यावत्स्यादह्ना रात्र्या च संचितम् ॥
भारतस्य वपुर्ह्येतत् सत्यं चामृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ॥
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
यथैतानीतिहासानां तथा भारतमुच्यते ॥
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नदानं वै पितृंस्तस्योपतिष्ठते ॥
इतिहास पुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥
कार्ष्णं वेदमिमं विद्वान् श्रावयित्वार्थमश्नुते ।
भ्रूणहत्यादिकं चापि पापं जह्यादसंशयम् ॥
य इमं शुचिरध्यायं पठेत्पर्वणि पर्वणि ।
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ॥
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ॥
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः ॥

तथा च भागवते

स्त्रीशूद्रद्विज बन्धूनां त्रयी न श्रुति गोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥

तत्रैव स्वयमेवाह भगवान् व्यासः—

धृत व्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥
भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥

तथा च भारते

धर्मार्थ काम मोक्षार्थैः समास व्यास कीर्तनैः ।
तथा भारत सूर्येण नृणां विनिहितं तमः ॥
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः ।
नृबुद्धि कैरवाणाञ्च कृतमेतत्प्रकाशनम् ॥

एवमेतत्पठन्ते य एक भक्त्यातु शङ्करे।
या गतिः सांख्ययोगानां व्रजन्त्येतां गतिं तदा॥
स्तवमेतं प्रयत्नेन सदा रुद्रस्य सन्निधौ।
अब्दमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम्॥

## तद्विषय एव युधिष्ठिरं प्रति भीष्म वचनम्—

तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम्।
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेन संमतम्॥
नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः।
पिशाचा यातुधाना वा गुह्यका भुजगा अपि॥
यः पठेत शुचिः पार्थ ब्रह्मचारी जितेन्द्रियः।
अभग्न योगो वर्षन्तु सोऽश्वमेध फलं लभेत्॥

## अस्यैव स्तवराजस्य विषये अनुशान पर्वणः १८ अध्याये भगवतः श्रीकृष्णस्य वचनम्—

इमं स्तव सन्नियतेन्द्रियश्च भूत्वा शुचिर्यः पुरुषः पठेत।
अभग्नयोगो नियतो मासमेकं संप्राप्नुयादश्वमेधे फलं यत्॥
वेदान् कृत्स्नान् ब्राह्मणः प्राप्नुयात्तु
जयेन्नृप पार्थ महीं च कृत्स्नाम्।
वैश्यो लाभं प्राप्नुयान्नैपुणं च
शूद्रो गतिं प्रेत्य तथा सुखं च॥
स्तवराज मिमं कृत्वा रुद्राय दधिरे मनः।
सर्व दोषापहं पुण्यं पवित्रं च यशस्विनः॥

अन्येषु च स्थलेष्वशेषाणां नराणां भारताऽध्ययनाऽधिकारः भारत एव स्पष्टः विस्तरभियाऽत्राऽधिकं नोपन्यस्यते।

---

## समन्वयः

श्री विष्णुसहस्रनाम स्तोत्रभाष्ये श्रीमच्छङ्कर भगवत्पादैः— वेदान्तगो ब्राह्मणः स्यादित्यादि श्लोकभाष्ये प्रतिपादितं "शूद्रः सुख

यथा दुग्धे स्थितं सर्पिर्न स्वादायोपकल्पते।
पृथग्भूत हि तद्द्रव्यं देवानां रस वर्धनम्॥
इक्षूणामपि मध्यान्तं शर्करा व्याप्य तिष्ठति।
पृथग्भूता च सा मिष्टा तथा भागवती कथा॥

भागवते च—

इदं भागवतं नाम पुराणं ब्रह्म संमितम्।
उत्तमश्लोक चरितं चकार भगवानृषिः॥
निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत्।
सर्वं वेदेतिहासानां सारं सारं समुद्धृतम्॥

## अतो हि पुराणानां माहात्म्यम्

नारदीये—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने।
वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशयः॥

स्कान्दे प्रभास खण्डे च—

वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः॥
बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति।
इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा॥
यन्न दृष्टं हि वेदेषु तद् दृष्टं स्मृतिषु द्विजाः।
उभयोर्यन्न दृष्टं तत् पुराणैः परिगीयते॥

## पुराणप्रशंसा

शिवपुराणे धर्मसंहितायां ४६ अध्याये।

शङ्कर उवाच—

उत्तमाधम मध्या वा नोत्तमो बहुधा नृपु।
आत्मश्रेयो न जानन्ति पश्यन्तोऽपि विचक्षुषः॥
स्थावराः पादमिच्छन्ति चतुष्पाद् बकुमीप्सवः।
मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः॥
यज्ञैर्दानैस्तपोभिस्तु स्वर्गः संप्राप्यते किल।
तत्रस्था मोक्षमिच्छन्ति मानवाः पतनाद्यतः।

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये॥

धर्मशास्त्राध्ययन श्रवण माहात्म्यं ब्राह्मणाः विशेषतया जानीयु। महत्या श्रद्धया च तच्छृणुयुः। अत एवोदितं

## भारते आदि पर्वणि।

त्रिभिर्वर्षैं महाभागः कृष्णद्वैपायनोऽब्रवीत्।
नित्योत्थितः शुचिः शक्तो महाभारतमादितः।
तपो नियममास्थाय कृतमेतन्महर्षिणा।
तस्मान्नियम संयुक्तैः श्रोतव्य ब्राह्मणैरिदम्।
सर्वं श्रुतिसमूहोऽय श्रोतव्यो धर्मबुद्धिभिः॥

अत एव पूर्वोक्तं वचन वेदैः संमितं भारतं तन्महत्वविशेषज्ञान् ब्राह्मणानग्रतः कृत्वा चतुरो वर्णान् श्रावयेदेतावन्तमर्थं प्रकटयति, ब्राह्मणेतरेषां क्षत्रियवैश्यशूद्राणां भारताध्ययनाधिकार न निवर्त्तयति। भगवतो भाष्यस्यायमंशः महर्षेर्व्यासस्य मूलवचनविरुद्धः। तथा च विष्णुसहस्रनामभाष्यपूर्वभागे अन्तभागे च स्वयं श्री मद्भगवत्पादैः प्रकाशितार्थं संकोचयति।

## युधिष्ठिरः अपृच्छत्

किमेकं दैवतं लोके किं वाप्येकं परायणम्।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम्॥

अयं श्लोको भाष्ये श्रीमच्छङ्कराचार्यैरित्थं व्याख्यातः—

"कं कतमं देवं स्तुवन्तः गुणकीर्त्तनं कुर्वन्तः कं कतमं देवं अर्चन्त. बाह्यमाभ्यन्तरं वा अर्चनं बहुविधं कुर्वन्त मानवाः मनुष्यताः शुभं कल्याणं स्वर्गापवर्गादिफलं प्राप्नुयु. लभेरन् इति। पुनः प्रश्नद्वयम्"

को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन्मुच्यते जन्तुर्जन्मसंसार बन्धनात्॥

अस्य श्लोकस्य भाष्यमित्थं—

"किं जप्यं जपन् उच्चोपांशुमानसलक्षणं जपं कुर्वन् जन्तुः जननधर्मा। अनेन जन्तुशब्देन जपार्चनस्तवनादिषु यथायोग्य सर्वप्राणिनामधिकारं सूचयति" इति।

## इतिहासपुराणां श्रवणे तथा पठनेऽपि यथा द्विजानां तथा स्त्रीशूद्राणामधिकारः।

यद्यपीतिहास पुराणानि चतुर्णामपि वर्णानां निःश्रेयसाय तथाऽपि स्त्रीशूद्रद्विजबन्धूनां विशेषेण कल्याणकराणि। तथाहि

### भविष्य पुराणे—

ब्राह्मणादिषु वर्णेषु त्रिषु वेदाः प्रतिष्ठिताः।
मन्वादीनि च शास्त्राणि तथाङ्गानि च सर्वशः॥
शूद्राश्चैव भृशं दीनाः प्रति भान्ति द्विज प्रभो।
धर्मार्थ काम मोक्षस्य शक्ताः स्युरधुने कथम्।
आगमेन विहीना हि अहो कष्टं मतं मम॥
कश्चैष आगमः प्रोक्तः पुरा द्विजमनीषिभिः।
त्रिवर्ग प्राप्तये ब्रह्म न्छ्रेयसे च तथोभयोः॥
सुमन्तु रुवाच।
साधु साधु महाबाहो शृणु मे परम वचः।
चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे।
धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम॥
विशेषतस्तु शूद्राणां पावनानि मनीषिभिः।
अष्टादश पुराणानि चरितं राघवस्य च॥
रामस्य कुरुशार्दूल धर्मकामार्थ सिद्धये॥
तथोक्तं भारतं वीर पाराशर्येण धीमता।
वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो॥
कृपालुना कृतं शास्त्रं चतुर्णा मिह श्रेयसे।
वर्णानां भवमग्नानां कृतं पोतो ह्यनुत्तमम्॥

*एतेषामितिहास पुराणानां श्रवणे तथा पठनेऽपि यथा द्विजाना-मधिकारस्तथैव स्त्रीशूद्रद्विजबन्धूनाम्।*

### तथाहि रामायणे प्रथमाध्याये—

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम्।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते॥

वैश्यस्तदा अस्य श्रवणेन परिकीर्त्तनेन वा धन समृद्धः स्यात्, चेच्छूद्रस्तदा अस्य श्रवणेन परिकीर्त्तनेन वा सुखमवाप्नुयात्।
तदग्रे च—

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्त्तयेत्॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः।
सर्वपाप विशुद्धात्मा याति ब्रह्म सनातनम्॥
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः।
युज्येतात्मसुखक्षान्ति श्री धृतिस्मृतिकीर्तिभिः॥
इदं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च॥

अत्र भगवद्गुपादानां भाष्यम्।

"इदं स्तवं इत्यादिना सहस्रशाखा ज्ञानेन सर्वज्ञेन भगवता कृष्णद्वैपायनेन साक्षान्नारायणेन कृतमिति सर्वैरेव अर्थिभि सादरं पठितव्यं सर्वफलसिद्धय इति दर्शयति।"

'यः' 'पुरुष' 'मर्त्यः' 'यः पुरुषः श्रेयः प्राप्तुं सुखानि च इच्छेत् सः पठेत् इत्यादिभिः शब्दैः सर्वेषामेव जनानामस्याध्ययने अधिकारो निनादितः।

तथाहि ब्रह्मसूत्रभाष्ये अपशूद्राधिकरणेऽपि भगवत्पादैः शङ्कराचार्यैः 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्।' इति प्रतिपादितः। अधिगमः यथा श्रवणात्तथैव पठनाद् भवति इति इतिहास पुराणान्येवोच्चैः घोषयन्ति। इति अग्रे प्रदर्श्यते।

---

## तत्रादौ श्रीमद्भागवतस्य महिमा

विश्रुत एवास्ति—

निम्नगानां यथा गङ्गा देवानामच्युतो यथा।
वैष्णवानां यथा शम्भुः पुराणानामिदं तथा॥

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ इति ॥

पुनश्च तत्रैव—

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम्।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥

भगवद्गीतान्तेऽपि—

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञान यज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्य कर्मणाम्॥

तथा भगवद्गीता माहात्म्ये

गीता शास्त्रमिदं पुण्यं यः पठेत्प्रयत पुमान्।
विष्णोः पदमवाप्नोति भयशोकादि वर्जितः ॥

भीष्मस्तवराजान्ते च—

इति स्मरन् पठति च शार्ङ्गधन्वनः
शृणोति वा यदुकुलनन्दनस्तवम्।
स चक्रभृत् प्रतिहत सर्वकिल्विषो।
जनार्दनं प्रविशति देह सत्तये ॥
स्तवराजः समाप्तोऽयं विष्णोरद्भुत कर्मणः।
गाङ्गेयेन पुरा गीतो महापातक नाशन ॥

इमं नरः स्तवराज मुमुक्षुः पठन् शुचिः कलुषित कल्मषापहम्।
अतीत्य लोकान् मलिनः समागतान् पदं स गच्छत्यमृतं महात्मनः॥

एवमेव शिवसहस्रनामस्तवान्ते च—अनुशासन पर्वणि सप्तदशाऽध्याये—

इदं पुण्यं पवित्रं च सर्वदा पाप नाशनम्।
योगद मोक्षदं चैव स्वर्गदं तोयदं तथा ॥

मया प्रकाशित ह्येतद्रहस्यं भुवि दुर्लभम्।
चतुर्वर्गप्रद नृणां पठतां शृण्वतां सदा॥
विप्रो वेदनिधिर्भूयात् क्षत्रियो जयते महीम्।
वैश्यो धन समृद्धः स्याच्छूद्रो मुच्येत दुःखतः॥ इति॥

**शिवपुराणे** विश्वेश्वरसंहितायां शिवलिङ्गमहिमवर्णनावसरे—

य इमं पठतेऽध्यायं यः शृणोति नरः सदा।
शिवज्ञानं स लभते शिवस्य कृपया बुधाः॥

तत्रैव शिवपुराणे सनत्कुमार संहितान्ते—

इदं पुराणं परमं पवित्रं शुचिः पठेद्यः शृणुयाच्च यो नरः।
स सर्व कामान्समवाप्य दुर्लभान् शिवस्य चान्ते पदमुत्तम व्रजेत्॥
अधीते चास्य यः श्लोकं श्लोकार्धं वा समाहितः।
श्रद्धया भक्ति युक्तो वा तस्य प्रीतो भवेच्छिव॥

**तथा च स्कंद पुराणे**

एतच्छिव पुराण हि परमं शास्त्रमुत्तमम्।
पठना च्छ्रवणादस्य भक्तिमान्नरसत्तमः॥
सद्यः शिवपद प्राप्ति लभते सर्व साधनाम्।
तस्मात्सर्व प्रयत्नेन कांक्षितं पठनं नृभिः।
तथास्य श्रवणं प्रेम्णा सर्व काम फल प्रदम्॥
पुराण श्रवणाच्छंभो र्निष्पापो जायते नरः॥
भुक्त्वा भोगान्सुविपुलाञ्छिव लोक मवाप्नुयात्॥
चतुर्वर्ग प्रदं शैवं पुराणममलं परम्।
श्रोतव्यं सर्वदा प्रीत्या पठितव्यं विशेषतः॥

**मार्कण्डेयपुराणान्ते च**

पुण्यं पवित्रमायुष्यं सर्वकामार्थसिद्धिदम्।
पठतां शृण्वतां चापि सर्वपापैः प्रमुच्यते॥
एतान्सर्वान् नरः शृण्वन् पठन्नपि समासु च।
विधूय सर्वपापानि ब्रह्मण्येव लयं व्रजेत्॥

पवामुयात्। श्रवणेनैव न तु जपयज्ञेन। 'तस्माच्छूद्रो यज्ञे ऽनवक्लृप्तः' इति श्रुतेः। 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' इति भारते श्रवणमनुज्ञायते। 'सुगतिमियाच्छ्रवणाच्चशूद्रयोनिः' इति हरिवंशे। यः शूद्रः श्रृणुयात्स सुखमवाप्नुयात् इति व्यवहितेन सम्बन्धः त्रैवर्णिकानां कीर्तयेदित्यनेन।"

'श्रवणेनैव न तु जपयज्ञेन' इममर्थं पुष्टं कुर्वता भगवता तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतिप्रमाणमुपन्यस्तम्। किन्तु सा श्रुतिस्तु स्पष्टं शूद्रस्य वैदिके यज्ञे अनवक्लृप्ततां प्रकटयति न तु विष्णुसहस्रनामस्तोत्रपरिकीर्त्तने। अत्र तु परिकीर्त्तयेदिति शब्दस्य स पदार्थः यः किं जपन्मुच्यते जन्तुरितिश्लोकभाष्ये भगवता प्रतिपादितः। तद्यथा-'किं जप्यं जपन् उच्चोपांशुमानसलक्षणं जपं कुर्वन् जन्तुः जननधर्मा जन्मसंसारबन्धनान्मुच्यत' इति।

यच्च भगवता प्रतिपादित 'श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत.' इति महाभारते श्रवणमनुज्ञायते' तत्तथ्यम्। इतिसाह पुराण कथाश्रवण विधि कथने पद्मपुराणे कथा मण्डपेष्वासन परिकल्पन विषये कथित-

'तेषु विप्रा विरक्ताश्च स्थापनीया प्रयत्नत.।
पूर्वं तेषा मासनानि कर्त्तव्यानि यथोत्तरम्॥'

तथा च भविष्ये

'शूद्राणां पुरतो वैश्यो वैश्यानां क्षत्रियः पर।
क्षत्रियान्ते तथा विप्रा श्रृणुयुश्चाग्रत सदा॥

धर्मकार्येषु ब्राह्मणानां प्रधानता स्थिता एव। वर्णानां ब्राह्मणो गुरुः। तथा च मनुः

उत्तमांगोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात्।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मण प्रभुः॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविन।
बुद्धिमत्सु नरा श्रेष्ठाः नरेषु ब्राह्मणा स्मृताः॥
उत्पत्तिरेव विप्रस्य मूर्तिधर्मस्य शाश्वती।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥

तस्माद्विप्रवरैः स्वधर्मनिरतैर्मुक्त्येकमार्गेप्सुभि
स्तद्वत्क्षत्रियपुङ्गवैस्तु नियतैः श्रेयोऽर्थिभिः सर्वदा।
वैश्यैश्चानुदिन विशुद्धकुलजैः शूद्रैस्तथा धार्मिकैः
श्रोतव्यं त्विदमुत्तम बहुफलं धर्मार्थमोक्षप्रदम्॥

तत्रैव—

धर्मेण राज्यं लभते मनुष्यः
स्वर्गं च धर्मेण नरः प्रयाति।
आयुश्च कीर्त्तिं च तपश्च धर्मं
धर्मेण मोक्षं लभते मनुष्यः॥
धर्मोऽत्र माता पितरौ नरस्य
धर्मः सखा चात्र परे च लोके।
भ्राता च धर्मस्त्विह मोक्षदश्च
धर्मादृते नास्ति तु किंचिदेव॥

तस्मिन्नेव पुराणे कण्डोरुपाख्यानान्ते—

श्रीभगवद्वचनम्—

भक्तोऽसि मे मुनिश्रेष्ठ मामाराधय नित्यशः।
मत्प्रसादाद्ध्रुव मोक्ष प्राप्स्यसि त्वं समीहितम्॥
मद्भक्ताः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातिजाः।
प्राप्नुवन्ति परां सिद्धिं किं पुनस्त्व द्विजोत्तम॥
श्वपाकोऽपि च मद्भक्तः सम्यक् श्रद्धासमन्वितः।
प्राप्नोत्यभिमतां सिद्धिमन्येषां तत्र का कथा॥

तत्रर्व व्यास उवाच—

यः पठेच्छृणुयाद्वापि कथां कण्डोर्महात्मनः।
विमुक्तः सर्वपापेभ्य स्वर्गलोक स गच्छति॥

---

युधिष्ठिरप्रश्ने 'मानवा.' 'जन्तुः' अनयोः शब्दयोः प्रयोगेण
ामेव मनुष्याणां हिताय प्रश्न इति स्पष्टीकृतम्। तेषां प्रश्नाना-
े पितामहेन भीष्मेण सर्वेषामेव नराणां हितमुपदिष्टम्।

ाथा—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्॥
पुरुष इति श्लोकत्रये साधारणः।

ग्रे च—

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा॥

अत्र च शङ्करभगवत्पादभाष्यं स्पष्टम्।

सर्वेषां धर्माणामेव धर्मः अधिकतम इति मे मतः अभिप्रेतः—
भक्त्या तात्पर्येण पुण्डरीकाक्षं हृत्पुण्डरीके प्रकाशमानं वासुदेवं
ः गुणसंकीर्त्तनस्तुतिभिः सदा अर्चेत् सत्कारपूर्वकमर्चनं करोति
ः मनुष्यः इति यत् एष धर्म इति सम्बन्धः।'.-

'मानवाः' इति शब्दो युधिष्ठिरप्रश्ने प्रयुक्तः, स एव शब्दो
णुसहस्रनामस्तोत्रस्यान्ते भीष्मेण प्रयुक्तः।

यथा—

य इदं शृणुयान्नित्यं यश्चापि परिकीर्त्तयेत्।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः॥

मानव—ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च। अतस्तेषु सर्वेष्वेव
इदं स्तोत्रं शृणुयाद् यश्चापि परिकीर्त्तयेत् पठेत् स न केवलं नाशुभं
ुयात् अपि तु स्ववर्णस्वभावाभिलाषानुरूपं ज्ञानं विजयं धनं सुखं
आप्नुयात्। यदि स मानवो ब्राह्मणो भवेत् तर्हि अस्य विष्णु-
स्रनामस्तोत्रस्य श्रवणेन परिकीर्त्तनेन पठनेन वा वेदान्तगः स्यात्,
क्षत्रियस्तदा अस्य श्रवणेन परिकीर्त्तनेन वा विजयी भवेत्, चेद्

य इदं श्रावयेन्नित्यं पठेद्वा सुसमाहितः।
अनन्य भक्तिः श्रीशस्य जायते तस्य सर्वदा॥
विद्यार्थी लभते विद्यां धर्मार्थी धर्म माप्नुयात्।
मोक्षार्थी लभते मोक्षं कामार्थी लभते सुखम्॥
उमा महेश संवादे प्रोक्तं नाम सहस्रकम्।
कैलासात्तत्समानीतं नारदेनाब्जजन्मना॥
लोकानां ब्राह्मणानां च क्षत्रियाणां विशेषतः।
स्त्री शूद्राणां विशेषेण, पठितव्यं समाहितैः॥
इदं पवित्रं परम पुण्य मायुष्य वर्धनम्।
पठितव्यं विशेषेण विष्णोः सायुज्य माप्नुयात्॥
विष्णो र्नाम सहस्रं तत्पावनं भुवि विश्रुतम्॥

---

# भ्रांति निरसनम्

## भट्टकमलाकरैः

शूद्रकमलाकरे शूद्राणां पुराणश्रवणेऽधिकारं इत्यर्थं प्रतिपादयद्भिः-पठन्द्विजो वागृषभत्वमीयादस्मिन् श्लोके जनश्च शूद्रोऽपि महत्वमीयादित्यस्य स्थाने शृण्वंश्च शूद्रोऽपि महत्वमीयादिति पाठः स्वीकृतः। स तु स्पष्टवाल्मीकिमुनि वचन विरुद्धः। अतो हेयः। भट्टमहोदयानां मते "शूद्राणां पुराणश्रवणमात्रेऽधिकारः। इदमपि विप्रादि द्वारैव। तत् सिद्धं शूद्रस्य विप्रद्वारा पुराणश्रवणेन ज्ञानमिति" तेषां निर्णय — तथा च 'एवं पुराण विष्णुसहस्रनाम चण्डीस्तोत्रादि पाठेऽप्यनधिकारः। श्रवणमात्रेऽधिकारेण पाठाऽप्रसक्तेः। तदुक्तं हरिवंशे। 'शृणुतिमियाच्छ्रवणाच्च शूद्रजातिरिति।' अतएव भारते विष्णुसहस्रनामसु—

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात्।

इत्यत्र शूद्र' श्रवणेनैवेति शङ्कराचार्येण व्याख्यातम्। किं बहुना शूद्रकर्तृक स्नानदान श्राद्धादौ विप्रस्यैव पौराणमंत्रपाठः शूद्रस्य तु श्रवणमात्रम् पुराणपाठाभावेन तन्मन्त्रेषु पाठाप्रसक्तश्च" इति। एतत्

क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा ।
तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥

भागवते ।

तस्य च पठने अशेषाणां नराणामधिकारो वर्तते अस्मिन्नर्थे भागवतमेव प्रमाणम् । यथा—

विप्रोऽधीत्याऽऽप्नुयात्प्रज्ञां राजन्योदधिमेखलाम् ।
वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥

तथा च—

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञान विरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥

भागवते ॥

भागवतान्तर्गत पृथुचरितस्यान्ते च—

य इदं सुमहत्पुण्यं श्रद्धयावहितः पठेत् ।
श्रावयेच्छृणुयाद्वापि स पृथोः पदवीमियात् ॥
ब्राह्मणो ब्रह्म वर्चस्वी राजन्यो जगतीपतिः ।
वैश्यः पठन् विट्पतिः स्यात् शूद्रः सत्तमतामियात् ॥

विष्णुपुराणान्ते च—

यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथान्ते च सः
ब्रह्मज्ञानमयोऽच्युतोऽखिल जगन्मध्यान्तसर्गप्रभुः ।
तच्छृण्वन् पुरुषः पवित्रपरमं भक्त्या पठन् धारयन्
प्राप्नोत्यस्ति न तत्समस्तभुवनेष्वेकान्तसिद्धिर्हरिः ॥

एवमेवान्येषु पुराणेषु शूद्राणां पुराण पठने अधिकारः प्रतिपादितः । यथा

नारदीये उत्तर खंडे ८२ अध्याये ।

तदिदं भगवान्साक्षान्नारदोऽध्यात्मदर्शनः ।
वेदव्यासाय मुनये रहस्यं निर्दिदेश ह ॥

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसंकराः ॥
प्रतिकूलं वर्त्तमाना बाह्या बाह्यतरान्पुन ।
हीना हीनान्प्रसूयन्ते वर्णान् पञ्चदशैव तु ॥

**अत्र मेधातिथिः**

'एवं चतुर्वर्णानां प्रत्येकं पञ्चदशधा भेदाः षड्भिः संपद्यन्ते मुख्याश्चत्वारो वर्णाः सा चतु.षष्टिर्भवंति । परस्परसंपर्कात् तेषा मन्येऽनन्तभेदा भवन्ति ।—वर्णान् पञ्चदशैवेति 'नास्ति तु पञ्चम' (१०-४) इति पञ्चमस्य वर्णत्वाभावात् पञ्चदशसु वर्णत्वमुपचाराद् द्रष्टव्यम् ।'

**पुनरपि मनुः**

स्वजातिजान-तरजा षट् सुता द्विजधर्मिणः ।
शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

**तत्र मेधातिथिः**

'स्वजातीयास्त्रैवर्णिकेभ्यः समानजातीयासु जातास्ते द्विज धर्म्माण इति एतत्सिद्धमेवानूद्यते । अनन्तरजा अनुलोमा ब्राह्मणात् क्षत्रियावैश्ययोः क्षत्रियाद्वैश्यायां जातास्तेपि द्विजधर्माण उपनेया इत्यर्थः । उपनीताश्च द्विजातिधर्म्मैः सर्वैरधिक्रियन्ते । ये पुनरपध्वंसजाः संकरजास्ते शूद्राणां सधर्माणः समानाचारास्त द्धर्मैरधिक्रियन्त इत्यर्थः ।'

अतः यथा शूद्राणां इतिहास पुराणानां पठने श्रवणे चाधिकारस्त थैव सर्वेषामपध्वंसजानां इतिहास पुराणानां पठने श्रवणे चाधिकार इति सिध्यति ।

तथापि

**भट्टकमलाकरैः** शूद्रकमलाकरे अथ शूद्रस्य मन्त्र विचार इति प्रसज्यैव लिखितम्—"तत्र अविद्यत्वाद्वेदमन्त्रेनाऽधिकारः । व्यासोऽपि—

शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।
वेद मन्त्र स्वधा स्वाहा वषट् कारादिभिर्विना ॥

तथैव वायुपुराणान्ते—

गयाख्यानमिदं पुण्यं यः पठेत्सततं नरः।
शृणुयाच्छ्रद्धया यस्तु स याति परमां गतिम्॥

ब्रह्मपुराणान्ते—

यज्ज्येष्ठशुक्लद्वादश्यां स्नात्वा वै यमुनाजले।
मथुरायां हरिं दृष्ट्वा प्राप्नोति पुरुषः फलम्॥
तदाप्नोति फलं सम्यक् समाधानेन कीर्तनात्।
पुराणस्य हिते विप्रा केशवार्पितमानसः॥
यत्फलं श्रियमालोक्य पुरुषोऽथ लभेन्नरः।
तत्फलं समवाप्नोति यः पठेच्छृणुयादपि॥
इदं यः श्रद्धया नित्यं पुराणं वेदसंमितम्।
यः पठेच्छृणुयान्मर्त्यः स याति भुवनं हरेः॥
श्रावयेद् ब्राह्मणो यस्तु सदा पर्वसु संयतः।
एकादश्यां द्वादश्यां च विष्णुलोकं स गच्छति॥
इद यशस्यमायुष्यं सुखदं कीर्त्तिवर्द्धनम्।
बलपुष्टिमद नृणां धन्यं दुःस्वप्ननाशनम्॥
त्रिसन्ध्यं यः पठेद्विद्वाम् श्रद्धया सुसमाहितः।
इदं वरिष्ठमाख्यानं स सर्वमीप्सितं लभेत्॥
रोगार्त्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
भयाद्विमुच्यते भीत आपदापन्न आपदः॥
जातिस्मरत्वं विद्यां च पुत्रान्मेधां पशून्धृतिम्।
धर्मं चार्थं च कामं च मोक्षं तु लभते नरः॥
यान् यान् कामानभिप्रेत्य पठेत्प्रयतमानसः।
तांस्तान्सर्वानवाप्नोति पुरुषो नात्र संशयः॥
यश्चेदं सततं शृणोति मनुजः स्वर्गापवर्गप्रदं
विष्णुं लोकगुरुं प्रणम्य वरदं भक्त्येकचित्तः शुचिः।
भुक्त्वा चात्र सुखं विमुक्तकलुषः स्वर्गे च दिव्यं सुखं
पश्चाद्याति हरेः पदं सुविमलं मुक्तो गुणैः प्राकृतैः॥

महर्षिणा व्यासेन

स्त्री शूद्र द्विज बन्धूनां त्रयी न श्रुतिगोचरा।
कर्म श्रेयसि मूढानां श्रेय एवं भवेदिह॥

इति भारत माख्यानं 'वेदैश्चतुर्भिः संयुक्तं' 'सर्व श्रुति समूहं' 'वेदार्थैर्भूषित' अतश्च 'वेदैः संमितं' कृपया प्रकाशितम्, यदा 'सर्व वेदेतिहासानां सारं सारं समुद्धृत्य' महाभागवतं प्रकाशितम् 'यत्कथासु तु वेदार्थः श्लोकेश्लोके पदे पदे', यदाहि अन्येषु पुराणेषु च सर्व वर्णानामुपकाराय स्वल्पमेव रूपान्तरं कृत्वा बहवयः श्रुतयः निवेशिताः, यदा हि विष्णु शिव ब्राह्म पाद्मादीनि पुराणादीनि प्रकाशितानि येषु बहुषु स्थानेषु ओङ्कारः अथवा ओङ्कार-संयुता अनेके मन्त्राः निवेशिताः, तदारभ्यैव पुराणेषु निवेशितस्योंकारस्यो च्चारणे स्त्रीणां शूद्राणा मधिकारः निर्विवादरूपेण स्थापितः।

---

## अत्र बहूनि उदाहरणानि

**महर्षिणा व्यासेन विष्णु सहस्र नामान्ते** 'सर्व प्रहरणायुध ओमिति' शब्दः प्रयुक्तः। तस्य सहस्र नामस्तोत्रस्य यथा श्रवणे तथैव परिकीर्तने शूद्राणामधिकारः स्पष्टमेव प्रति पादितः 'शूद्रः सुखमवाप्नुया दि'ति।

**श्रीमद्भागवते**च यस्य पठने शूद्राणामधिकारः तत्रैव प्रतिपा दितः 'शूद्रः शुध्येत पातकात्' इति प्रायः प्रत्येक स्कन्धारम्भे ॐ नमो भगवते वासुदेवायेति मन्त्रो गर्जति।

तत्रैव—षष्ठस्कंधे नारायणवर्म कथने।

धौताङ्घ्रि पाणिराचम्य सपवित्र उदङ्मुखः।
कृतस्वाङ्ग करन्यासो मन्त्राभ्यां वाग्यतः शुचिः॥
नारायणमयं वर्म सन्नह्येद्भय आगते।
पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि॥

तथा च अग्निपुराणे

अग्निनोक्तं पुराणं यदाग्नेयं ब्रह्म संमितम्।
भुक्ति मुक्ति प्रदं दिव्यं पठतां शृण्वतां नृणाम्॥
अ० ३८३ पठन्नाग्नेयकं नित्यं शृण्वन्वापि पुराणकम्।
भक्तो वशिष्ठ मनुजः सर्व पापै प्रमुच्यते॥
शृण्वन्विप्रो वेदवित्स्या त्क्षत्रियः पृथिवीपति।
ऋद्धि प्राप्नोति वैश्यश्च शूद्रश्चारोग्य मृच्छति॥
यः पठेच्छृणुया न्नित्यं समदृग्विष्णु मानसः।
ब्रह्माग्नेयं पुराणं स तत्र नश्यन्त्युपद्रवाः॥

स्कंदपुराणे प्रभास खण्डे

इदं पुराण मायुष्यं चतुर्वर्ग सुखप्रदम्।
निर्मितं षण्मुखेनेह नियतं सुमहात्मना॥
यो नरः शृणुयाच्छ्रद्धया दिनानि च कियन्ति वै।
सर्वार्थ सिद्धो भवतिर्य एतत्पठते नरः॥
शृण्वतः पठत श्चैव सर्वकामप्रदो नृणाम्।
पुण्य श्रुत्वा पुराण वै दीर्घ मायुश्च विन्दति॥
महीं विजयते राजा शत्रूं श्चाप्यधितिष्ठति।
वेदविच्च भवेद्विप्रः क्षत्रियो राज्य माप्नुयात्॥

पद्मपुराणे भूमिखण्डे

द्वादशैव सहस्राणां पद्माख्या सा तु संहिता।
कलौ युगे पठिष्यन्ति मानवा विष्णु तत्पराः॥

तत्रैव प्रथम सृष्टि खंडे

पुण्यं पवित्र मायुष्यं सर्व पाप विनाशनम्।
पुराण मेतत्कथितं तीर्थं श्राद्धानुवर्णनम्॥
शृणोति यः पठेद्वापि श्रीमान्संजायते नरः।
सर्व पाप विनिर्मुक्तः सलक्ष्मीकं हरिं लभेत्॥

तत्रैव उत्तर खंडे

एतत्ते सर्व माख्यात पुराणं वेद संमितम्।
ब्रह्मणा कथितं राजन् मनोः स्वायंभुवोऽन्तरे॥

शुक्ले मार्गशिरे पक्षे योषिद् भर्त्तुरनुज्ञया।
आरभेत व्रतमिदं सार्वकामिकमादितः॥
स्नात्वा शुक्लदती शुक्ले वसीतालंकृतांबरे।
पूजयेत्प्रातराशात्प्राग् भगवन्तं श्रिया सह॥
ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूति पतये सह महाविभूतिभिर्बलिमुपहराणीति॥

अनेनाहरहर्मंत्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवास उपवीत विभूषण गंधपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपाहरेत्॥

हविःशेषं तु जुहुयादनले द्वादशाहुतीः।
ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति।
श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ।
भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसम्पदः॥
प्रणमेद्दण्डवद् भूमौ भक्तिप्रह्वेण चेतसा।
दशवारं जपेन्मंत्रं ततः स्तोत्रमुदीरयेत्॥

अष्टमस्कंधे षोडशाध्याये
अदिति पयोव्रतकथायां च—

शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति।
ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया॥
इति भगवान् कश्यपः देवीमदिति मुपदिशतिस्म।
मूल मन्त्रस्तु ॐ नमो नारायणाय इति॥

## पद्मपुराणे भूमिखंडे वासुदेवाभिधाननाम्नि स्तोत्रे—

विज्वल उवाच—

तवार्थे पृच्छितस्तातस्तेन मे कथित च यत।
तत्तेऽद्याहं प्रवक्ष्यामि शाश्वत शृणु सत्तम॥
ॐ अस्य श्री वासुदेवाभिधानस्तोत्रस्यानुष्टुप् छन्दः।
नारद ऋषिः। ॐकारो देवता। सर्वपातकनाशाय
चतुर्वर्गसाधनार्थे च विनियोगः॥

कमलाकरमतं रामायण महाभारत महाभागवत विष्णुपुराणादि पूर्वोद्धृतवचनमातविरुद्धमतो नादरणीयं विद्वद्भिः॥

## पुराणान्तर्गत मंत्राणामुच्चारणे सर्वेषां श्रद्धाभक्तिसमन्वितानामधिकारः।

भट्टकमलाकरा अपि मन्यते यत्पुराणे श्रवणविधानादेव तदन्तर्गत वेदिक मन्त्रश्रवणेऽपि न दोषः।

अत. यदि पूर्वोद्धृत रामायण महाभारत भागवत विष्णुपुराणादि वचसां प्रामाण्येन स्त्रीशूद्र द्विजबन्धूनां यथा पुराणश्रवणे तथैव पुराणाऽध्ययनेऽप्यधिकारोऽस्तीति स्थितः तर्हि तदन्तर्गतानां मन्त्राणामुच्चारणे तेषामधिकार इति स्वत. सिद्ध्यति। अतएवोक्त

### श्रीभट्टकुमारिलैः मीमांसा तन्त्रवार्त्तिके।

'तानेव वैदिकान् वर्णान् भारतादि निवेशितान्।
स्वाध्यायनियमं हित्वा लोक बुद्ध्या प्रयुञ्जते। इति

---

तथापि द्विजस्त्रीणां तथा शूद्राणां प्रणवसंयुतानां पौराणिकमंत्राणां ग्रहणेऽधिकारः इति अन्यैरपि प्रमाणैः प्रदर्श्यते।

आदौ स्मर्तव्य मेतत् यत् यस्य विराट्पुरुषस्य
मुखतो ब्राह्मणो जात बाहुभ्यां क्षत्रियस्तथा।
ऊर्वोर्वैश्यश्च तस्यैव पद्भ्यां शूद्रो व्यजायत॥

वर्णाश्चत्वार एव। तथाहि मनुः

ब्राह्मण क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातय॰।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चम॥
सर्व वर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥
स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥

मार्कंडेय उवाच—

ॐ नमो भगवते वासुदेवाय।

ॐ नमो नारायणाय।

एतौ मया वः कथितौ पवित्रौ
मंत्राविमौ पापहरौ धरण्याम्।
परायणौ सर्वतपस्विनां वरौ
वरस्य भूतौ भुवनेषु नित्यम्॥

## ब्रह्मपुराणे

एकषष्ठितमेऽध्याये विष्णुपूजन विधौ अष्टाक्षर विधानेन विष्णुपूजनविधिः विपुलतया वर्णितः। एष पूर्णोऽध्यायः विशेषतया पठनीयः।

संक्षेपतः—

अष्टाक्षरं ततो मंत्रं विन्यसेच्च यथाक्रमम्।
तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम्॥
एवं संपूज्य देवेशं मण्डलस्थं जनार्दनम्।
लभेदमिमताम्कामान्नरो नान्यत्र संशयः॥
ॐकारादिसमायुक्तं नमः कारान्तदीपितम्।
तन्नाम सर्वसत्वानां मंत्र इत्यभिधीयते॥
अनेनैव विधानेन गन्धपुष्पं निवेदयेत्॥
एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु॥
जपं चैव प्रकुर्वीत मूलमंत्रेण मंत्रवित्।
अर्चनं ये न जानन्ति हरेर्मंत्रैर्यथोदितम्।
ते तत्र मूलमंत्रेण पूजयन्त्यच्युतं सदा॥

## नृसिंहपुराणे।

द्विषष्ठितमेऽध्याये पुरुषसूक्तेन विष्णोरर्चनविधिः प्रोक्तः। तदनन्तरं त्रिषष्ठितमेऽध्याये

नृसिंह तापिनीये—"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्राय
च्छति। पराशर भाष्येऽप्येवं। रामतापिनीये-सावित्रीं लक्ष्मीं यजुः
एवं यदि जानीयात् स्त्री शूद्रः स मृतोऽधो गच्छति।" इत्यादि

किंतु एतत् वैदिक विधिनोच्चारितस्योङ्कारस्य विषय एव
संघटते न तु स्मार्त मन्त्रस्थस्य।

तथा युगपरिवर्तनात्केषुचिद्धार्मिकेषुव्यवहारेषु
परिवर्तनं जायते।

तदेवाह मनुः

अन्ये कृत युगे धर्मास्त्रेतायां द्वापरेऽपरे।
अन्ये कलियुगे नृणां युगह्रासानुसारतः॥
तपः परं कृत युगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे॥

भागवते च—

यत्फलं नास्ति तपसा न योगेन समाधिना।
तत्फलं लभते सम्यक् कलौ केशव कीर्तनात्॥

अतएव शुक्रनीतौ धर्मकामानां धर्माध्यक्षाणां पण्डितानां
कर्तव्यता दर्शिता। यथा—

वर्तमानाश्च प्राचीना धर्माः के लोक संश्रिताः।
शास्त्रेषु के समुद्दिष्टा विरुध्यन्ते च केऽधुना॥
लोक शास्त्र विरुद्धाः के पण्डितस्तान् विचिन्त्य च।
नृपं सम्बोधयेत्तैश्च परत्रेह सुखप्रदैः॥

तथाहि याज्ञवल्क्यः।

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।
त्रैविद्यं वृत्तिमद् ब्रूयात्स्वधर्मः पाल्यतामिति॥
निज धर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥ इति॥

अतो हि यदा सर्व भूत हितैषिणा

ओं नमो नारायणायेति मंत्रः सर्वार्थ साधक ।
भक्तानां जपतां तात स्वर्गमोक्षफल प्रदः ॥
सर्ववेदरहस्येभ्यः सार एष समुद्धृत ।
विष्णुना वैष्णवानां हि हिताय मनुजां पुरा ॥
एव ज्ञात्वा ततो विप्रः अष्टाक्षरमिमं स्मरेत् ।
स्नात्वा शुचिः शुचौ देशे जपेत्पाप विशुद्धये ॥
स्नात्वा शुचिर्जपेद्यस्तु नमो नारायणं शतम् ।
स गच्छे त्परमं देव नारायणमनामयम् ॥
गन्धपुष्पादिभिर्वि ष्णुमनेनाराध्य यो जपेत् ।
महापातकयुक्तोऽपि मुच्यते नात्र संशयः ॥
हृदिकृत्वा हरिं देवं मन्त्रेणैनं तु यो जपेत् ।
सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् ॥
आयुष्यं धनपुत्रांश्च पशून्विद्यां मह यशः ।
धर्मार्थ काम मोक्षांश्च लभते जपतत्परः ॥
एत त्सत्यं च धर्म्यं च वेदश्रुति निदर्शनात् ।
एतत्सिद्धि कर नृणां मंत्ररूपं न संशयः ॥
अष्टाक्षरमिमं मंत्रं सर्वदुःखविनाशनम् ।
जप पुत्र महा बुद्धे यदि सिद्धिमभीप्सति ॥
[illegible]
[illegible] ये पुरुषाः पठन्ति ।
ते [illegible]
[illegible] ॥

[illegible]
[illegible] ।

[illegible]
[illegible]

भविष्यपुराणं ।

[illegible] ।
[illegible] ॥

मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत्।
ॐ नमो नारायणायेति विपर्ययमथापि वा।
करन्यासं ततः कुर्याद्द्वादशाक्षर विद्यया॥

'इति स्पष्टम्। तस्यांते च 'य इदं शृणुयात्काले यो धारयति चादृतः' इतिवचोभ्यां द्वादशाक्षराष्टाक्षर षडक्षराः प्रणवयुताः मंत्राः सर्वेषां हिताय इति प्रतिपादितः।

श्रीमद्भागवते चतुर्थ स्कन्धे भगवान् नारदः ध्रुवमुपदिशन्नकथयत्—

जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज।
यं सप्त रात्रं प्रपठन् पुमान् पश्यति खेचरान्॥

ॐ नमो भगवते वासुदेवाय—

मन्त्रेणानेन देवस्य कुर्याद् द्रव्यमयीं बुधः।
सपर्यां विविधैर्द्रव्यैर्देश काल विभागवित्॥

पञ्चम स्कन्धे ॐकार युताः बहवः मन्त्राः शोभन्ते। तेभ्य एक एव मन्त्रोऽत्रोद्ध्रियते।
श्रीशुक उवाच।

तत्रैव किंपुरुषे वर्षे भगवन्तमादिपुरुषं लक्ष्मणाग्रजं सीताभिरामं रामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान् सह किंपुरुषैरविरतभक्तिरुपास्ते। स्वयं चेदं गायति।

ॐ नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति॥

षष्ठस्कंधे पञ्चमेऽध्याये च दक्षपुत्रा 'आराधयन् मंत्रमिमभ्यस्यन्त इहस्पतिम्—

ॐ नमो नारायणाय पुरुषाय महात्मने विशुद्धसत्वधिष्ण्याय महाहंसाय धीमहि।

षष्ठस्कंधे एकोनविंशतितमेऽध्याये स्त्रीणां पुंसवनव्रतवर्णने—
श्रीशुक उवाच—

किंतस्य बहुभिर्मन्त्रैः किं तीर्थैः किं तपोऽध्वरैः ।
यस्यो नमः शिवायेति मन्त्रो हृदयगोचरः ॥
मन्त्राधिराजराजोऽयं सर्व वेदान्त शेखरः ।
सर्व ज्ञान निधानं च सोऽयं चैव षडक्षरः ॥
तस्मात्सर्व प्रदो मन्त्रः सोऽयं पञ्चाक्षरः स्मृतः ।
स्त्री भिः शूद्रैश्च संकीर्णैः धार्यते मुक्तिकांक्षिभिः ॥

तथा च शिवपुराणे वायवीय संहितायामुत्तरभागे द्वादशाध्याये

श्रीकृष्ण उवाच—

महर्षिवर सर्वज्ञ सर्वज्ञान महोदधे ।
पञ्चाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥

उपमन्युरुवाच ।

पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ।
अशक्यं विस्तराद्वक्तुं तस्मात्संक्षेपतः श्रृणु ॥
वेदे शिवागमे चायमुभयत्र षडक्षरः ।
मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः ।
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः ।
सर्वेषां शिवभक्तानामशेषार्थप्रसाधकः ।
तदल्पाक्षरमन्त्राढ्यं वेदसारं विमुक्तिदम् ।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम् ।
नानासिद्धियुतं दिव्यं लोकचित्तानुरञ्जकम् ।
सुनिश्चितार्थगम्भीरं वाक्यं तत्पारमेश्वरम् ।
मन्त्र सुखमुखोच्चार्यमशेषार्थ प्रसिद्धये ।
प्राहों नमः शिवायेति सर्वज्ञः सर्वदेहिनाम् ।
तद्बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम् ।
एतावत्तु शिवज्ञानमेतावत्परमं पदम् ।
यदोंनमः शिवायेति शिव वाक्यं षडक्षरम् ॥
शिव ज्ञानानि यावन्ति विद्यास्थानानि यानि च ।
षडक्षरस्य सूत्रस्य तानि भाष्य समासतः ॥

ॐ नमो भगवते वासुदेवाय । इति मन्त्रः ।

तदनन्तर स्तोत्रम्—तस्यान्ते चेद् स्तोत्रफलम् ।

एवमुक्ते शुभे वाक्ये राजा केशवमब्रवीत् ।
इद स्तोत्रं महापुण्यं सफल कुरु केशव ॥

वासुदेव उवाच—

सत्ये युगे महाराज यदा स्तोष्यति मानवः ।
तदा मोक्ष प्रदास्यामि तत्क्षणान्नात्र संशयः ॥
त्रेतायां मासमात्रेण मासषट्केन द्वापरे ।
वर्षैकेन कलौ प्राप्ते ये जपन्ति च मानवाः ॥
स्वर्गं यास्यन्ति राजेंद्र वैष्णव गतिदायकम् ॥
त्रिकालमेककाल वा स्नातो जपति ब्राह्मण ।
य य तु वाञ्छते काम स स तस्य भविष्यति ॥
क्षत्रियो जयमाप्नोति धनधान्यैरलंकृत. ।
वैश्यो भविष्यति श्रीमान् शूद्रः सुखमवाप्नुयात् ॥ इति ॥

## विष्णुधर्मोत्तरे च

द्वादशाक्षराष्टाक्षरमन्त्रयोः स्त्रीशूद्रयोरधिकार इति घोषितम् ।

मार्कंडेय उवाच—

तिलप्रस्थ तथा हुत्वा सोपवासो जितेन्द्रियः ।
न दुर्गतिमवाप्नोति नात्र कार्या विचारणा ॥
तद्विष्णोः परमं नित्यं सोममंत्र. प्रकीर्तित· ।
पौरुषं च तथा सूक्तं श्रीसूक्तेन च संयुतम् ॥
होम. कार्योऽथ राजेन्द्र सावित्र्या परमात्मन· ।

एतत्प्रोक्तं द्विजातीनां स्त्रीशूद्रेषु च यत् शृणु ।
द्वादशाष्टाक्षरौ मंत्रौ तेषां प्रोक्तौ महात्मनाम् ॥
हितौ तौ च द्विजातीनां मंत्रश्रेष्ठौ नराधिप ।
तेभ्योऽप्यधिकमंत्रोऽपि विद्यते नहि कुत्र चित् ॥

वज्र उवाच—

द्वादशाष्टाक्षरौ मंत्रौ कथयस्व ममानघ ।
पुण्यौ पवित्रौ माङ्गल्यौ सर्वपापप्रणाशनौ ॥

मम भक्तो जितक्रोधो ह्यलब्धो लब्ध एव वा ॥
किमत्र बहुनोक्तेन भक्ताः सर्वेऽधिकारिणः ।
मम पञ्चाक्षरे मंत्रे तस्माच्छ्रेष्ठतरो हि सः ॥
रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये ।
न वाच्यं यस्य कस्यापि नास्तिकस्याथवा पशोः ॥

**सदाचार विहीनस्य पतितस्यांतजस्य च ।**
**पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ॥**
**अन्त्यजस्यापि मूर्खस्य मूढस्य पतितस्य च ।**
**निर्मर्यादस्य नीचस्य मंत्रोऽयं न च निष्फलः ॥**

सर्वावस्थांगतस्यापि मयि भक्तिमत परम् ।
सिध्यत्येव न सन्देहो नापरस्य तु कस्यचित् ॥
ये दोषा सर्वमन्त्राणां न तेऽस्मिन् सम्भवन्त्यपि ।
अस्य मन्त्रस्य जात्यादीननपेक्ष्य प्रवर्तनात् ॥
तथापि नैव क्षुद्रेषु फलेषु प्रतियोगिषु ।
सहसा विनियुञ्जीत यस्मादेष महाफल ॥

उपमन्युरुवाच—

एवं साक्षान्महादेव्यै महादेवेन शूलिना ।
हिताय जगतामुक्तः पञ्चाक्षर विधि यथा ॥ इति ॥

अतः स्पष्टं लोके यः पञ्चाक्षरः स्मृतः स 'ॐ नमः शिवाय' इति ओङ्कार सहित षडक्षरः एव मन्त्रः । स च यथा द्विजै स्तथैव स्त्रीभिः शूद्रैः तथा अन्त्यजैश्च धारयितुं शक्यः । इति

'भवपाशनिबद्धानां देहिनां हित काम्यया ।
आहोनमः शिवायेति मंन्त्रमाद्यं शिव स्वयम् ॥'
'हिताय सर्व मर्त्यानां कलिजानां विशेषत.' ॥

तथाच

'सदाचार विहीनस्य पतितस्यांत्यजस्य च ।
पञ्चाक्षरात्परं नास्ति परित्राणं कलौ युगे ॥'

शतानीक उवाच—

सत्यमुक्तं त्वया ब्रह्मन् वैदिकः परमो विधिः ।
विष्णोर्देवादिदेवस्य पूजनं प्रति मेऽधुना ॥
अनेन विधिना ब्रह्मन् पूज्यते मधुसूदनः ।
वेदज्ञैरेव नान्यैस्तु तस्मात्सर्वहितं वद ॥

श्री मार्कण्डेय उवाच—

अष्टाक्षरेण देवेशं नरसिंहमनामयम् ।
गन्धपुष्पादिभिर्नित्यमर्चयेदच्युतं नरः ॥
राजन्नष्टाक्षरो मंत्रः सर्वपापहरः परः ।
समस्तयज्ञफलदः सर्वशान्तिकरः शुभः ॥

ओं नमो नारायणाय ।

गन्धपुष्पादि सकलमनेनैव निवेदयेत् ।
अनेनाभ्यर्चितो देवः प्रीतो भवति तत्क्षणात् ॥
किं तस्य बहुभिर्मंत्रैः किं तस्य बहुभिर्व्रतैः ।
ॐ नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥
इमं मंत्रं जपेद्यस्तु शुचिर्भूत्वा समाहितः ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥

## नृसिंह पुराणेऽष्टादशाध्याये च—

ओं नमो नारायणाय एष मंत्रः सर्वेषा मनुष्याणां हिताय मोक्ष इति स्पष्टमभिहितं तद्यथा—

श्रीशुक उवाच—

किं जपन्मुच्यते तात सततं विष्णुतत्परः ।
संसारदुःखात्सर्वेषां हिताय वद मे पितः ॥

व्यास उवाच—

अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मंत्रमुत्तमम् ।
यं जपन्मुच्यते मर्त्यो जन्मसंसारबन्धनात् ॥
हृत्पुण्डरीकमध्यस्थं शंखचक्र गदाधरम् ।
एकाग्रमनसा ध्यात्वा विष्णु कुर्याज्जपं द्विजः ॥
एकान्ते निर्जनस्थाने विष्णवग्रे वा जलान्तिके ।
जपेदष्टाक्षरं मंत्रं चित्ते विष्णुं निधाय वै ॥

विवर्धिकाः मोक्षदायिन्यः कतिपय कथाश्च अशेषाणां नृणां हितायात्र प्रकाश्यन्ते। अस्यांशमपि नित्यं श्रद्धया भक्त्या पठित्वा श्रुत्वा वा

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
धर्मज्ञानप्रचारेण प्रीयतां परमेश्वरः॥

---

## कोऽयं वै परमेश्वरः।
## अस्ति किं कोऽपि ईश्वरः।

अस्त्येव। एकमेवाद्वितीयम्—इति श्रुतिः

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवत्कश्चिद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वा चैनं वेद न चैव कश्चित्॥

अहरहः सहस्ररश्मिः सूर्य उदेति। अहरहः 'हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्।' अस्तंगते च जगत तस्थुषश्च आत्मनि भगवति मरीचिमालिनि अहरहः लोकाह्लादकरः अमृतांशुः रात्रिं ज्योतिष्मतीं कुर्वन् गगनपथमारूढः सूर्यवत् पूर्वदिशातः आकाशमार्गेण पश्चिमां दिशमुपयाति। आयातायां यामिन्यां वियत् दशदिशः प्रकाशयन्तीभिर्नक्षत्रताराग्रहाणां ज्योतिर्भिरनिर्वचनीयां शोभां धारयति। सर्व एव एते असंख्याताः नक्षत्रताराग्रहाः सूत्रैर्बद्धा गोलका इव अनिर्भेद्यै रलंघनीयैर्नियमैः दिनाद्दिनं मासान्मासं वर्षाद्वर्षं निर्दिष्टान्मार्गाननुसरन्तः वियति सचरन्तः दृश्यंते। अस्ति किं कोऽपि अस्य परमाश्चर्यमयगोलकमंडलस्य निर्माता नियंता च। अस्ति इति श्रुतिः।

'सूर्या चन्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवञ्च पृथिवीं चान्तरिक्ष मथो स्वः।'

### रचनानुपपत्तेश्च।

अत्यद्भुत मिदं प्राणात्मकं चिदात्मकं जगत्—जरायुजाः अंडजाः स्वेदजाः उद्भिज्जाः सर्व एव प्राणवन्तः। परमाश्चर्यमयी चैतेषां रचना—

'संगत्या जठरे न्यस्तं रेतो बिन्दुमचेतनम्।
केन यत्नेन जीवन्तं गर्भस्थमिह पश्यसि॥'

विष्णोरष्टाक्षरमन्त्रस्तु वेदज्ञा वेदज्ञ साधारणः। तथाहि नृसिं पुराणे षोडशऋगात्मक पुरुषसूक्तस्य प्रत्यृचमावाहनादि षोडशोपचारात्मके पूजाविधावुक्ते—

अनेन विधिना देवः पूज्यते मधुसूदनः।
वेदज्ञैरेव नान्यैस्तु तस्मात्सर्वहितं वद॥

इति प्रश्नानन्तरमाह

अष्टाक्षरेण देवेशं नरसिंह मनामयम्।
गंधपुष्पादिभि र्नित्य मर्चयेदच्युतं नरः॥

गन्धेति पूर्वोक्तसकलोपचारोपलक्षणम्।

तथा

एकान्तविजने स्थाने विष्णवग्रे वा जलान्तिके।
जपेदष्टाक्षरं मंत्रं चित्ते विष्णुं निधाय वै॥
आयुष्य धनपुत्रांश्च पशून्विद्यां महद्यशः।
धर्मार्थ काम मोक्षांश्च लभते जपकृन्नरः।" इति

---

## ॐ नमः शिवाय

एवं

ॐ नमः, शिवायेति मंत्र विषयेऽपि दृश्यते
तत्रादौ स्मर्तव्यं विद्वद्भिः यत् यो मन्त्रः
लोके पञ्चाक्षरः स्मृतः स षडक्षरो मन्त्रः॥

### तथाहि स्कन्दपुराणे

शैवं षडक्षरं दिव्यं मन्त्रमाहुर्महर्षयः।
देवानां परमो देवो यथा वै त्रिपुरान्तकः।
मन्त्राणां परमो मन्त्रस्तथा शैवः षडक्षरः॥
एष पञ्चाक्षरो मन्त्रो जन्तूणां मुक्तिदायकः।
संसेव्यते मुनिश्रेष्ठैरशेषैः सिद्धि कांक्षिभिः॥
भव पाश निबद्धानां देहिनां हित काम्यया।
आहों नमः शिवायेति मन्त्रमाद्यं शिवः स्वयम्॥

एक एव तदा रुद्रो न द्वितीयोऽस्ति कश्चन।
संसृज्य विश्वं भुवनं गोप्तान्ते संचुकोच सः॥
विश्वतश्चक्षुरेवाय मुतायं विश्वतो मुखः।
तथैव विश्वतो बाहु र्विश्वतः पाद संयुतः॥
द्यावा भूमी च जनयन् देव एको महेश्वरः।
स एव सर्व देवानां प्रभवश्चोद्भवस्तथा॥
सर्वानन शिरो ग्रीवः सर्वभूत गुहाशयः।
सर्वव्यापी च भगवां स्तस्मात् सर्वगतः शिवः॥
सर्वेन्द्रिय गुणाभासः सर्वेन्द्रियविवर्जितः।
सर्वस्य प्रभुरीशानः सर्वस्य शरणं सुहृत्॥
अचक्षुरपि यः पश्यत्यकर्णोऽपि शृणोति यः।
सर्वं वेत्ति न वेत्तास्य तमाहुः पुरुषं परम्॥

तथाच भागवते

एकः स आत्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः।
नित्योऽक्षरोऽजस्त्र सुखो निरञ्जनः पूर्णोऽद्वयो युक्त उपाधितोऽमृतः॥

विष्णौ च

ज्ञानं विशुद्धं विमलं विशोक मशेष लोभादि निरस्त संगम्।
एकः सदैकः परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥

वदन्ति तत्तत्त्वविदः तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥

---

एकं सत् विप्रा बहुधा वदन्ति।
एकं सन्तं बहुधा कल्पयन्ति। इति श्रुतिः

सृष्टेः प्राक्

आसीदिदं तमोभूत मप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥
ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जन्निदम्।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूत मयोऽचिन्त्यः स एव स्वयमुद्बभौ॥

किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहु विस्तरैः ।
यस्योंनमः शिवायेति मन्त्रोऽयं हृदिसंस्थितः ॥
तेनाधीतं श्रुतं तेन कृतं सर्वमनुष्ठितम् ।
येनोंनमः शिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ।
जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥
अन्त्यजो वाऽधमो वाऽपि मूर्खो वा पंडितोऽपि वा ।
पञ्चाक्षरं जपे निष्ठो मुच्यते पापपञ्जरात् ॥
इत्युक्तं परमेशेन देव्या पृष्टेन शूलिना ।
हिताय सर्व मर्त्यानां तिष्यजानां विशेषतः ॥

## तस्मिन्नेव शिव पार्वती संवादे महेश्वर वचनम् ।

देवी उवाच

कलौ कलुषिते काले दुर्जये दुरतिक्रमे ।
अपुण्यतमसाच्छन्ने लोके धर्मे पराङ्मुखे ॥
क्षीणे वर्णसमाचारे सङ्करे समुपस्थिते ।
सर्वाधिकारे सन्दिग्धे निश्चिते वा विपर्यये ॥
तदोपदेशे विहते गुरुशिष्य क्रमे गते ।
केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ॥

महेश्वर उवाच

आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम ॥
भक्त्या च भावितात्मानो मुच्यते कलिजा नराः ।
मयेवमसकृद्देवि प्रतिज्ञातं धरातले ।
पतितोऽपि विमुच्येत मद्भक्तो विद्ययाऽनया ॥
अशुद्धो वा सुशुद्धो वा सकृत्पञ्चाक्षरेण यः ।
पूजयेत्पतितो वाऽपि मूढो वा मुच्यते नरः ॥
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ।
स ब्रह्मागेण मां भक्त्या पूजयेद्यदि मुच्यते ॥
पतितोऽपतितो वापि मन्त्रेणानेन पूजयेत् ।

रुद्रो बहुशिरा बभ्रु र्विश्वयोनिः शुचिश्रवाः।
आदिदेवो महादेवो देवेशो देव भृद्गुरुः ॥ इत्यादि ॥

तथा च भागवते

अदितिपयोव्रतकथायां देवस्तुतौ।
नमस्तुभ्यं भगवते पुरुषाय महीयसे।
सर्वभूत निवासाय वासुदेवाय साक्षिणे ॥
नमः शिवाय रुद्राय नमः शक्तिधराय च।
सर्व विद्याधिपतये भूतनां पतये नमः ॥

भारते

वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः।
वासुदेवस्ततो ज्ञेयो योगिभिस्तत्त्वदर्शिभिः ॥

विष्णुपुराणे

सर्वाणि तत्र भूतानि वसन्ति परमात्मनि।
भूतेषु च सर्वात्मा वासुदेव स्ततो स्मृतः ॥

मनुः

आपो नारा इति प्रोक्ता आपो वै नर सूनवः।
ता यदस्यायनं पूर्वं तेन नारायण. स्मृतः ॥

भारते

नराज्जातानि तत्वानि नाराणीति ततो विदुः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥

ब्रह्मवैवर्त्ते

नराणामयनं यस्मात्तस्मान्नारायणः स्मृतः ॥
अन्तर्बहिश्च जगतो धाता व्याता सनातनः।
स्रष्टा नियन्ता शरणं विधाता विश्वभावनः ॥
माता पिता सखा भ्राता निवासश्च सुहृद्गतिः।
योऽसौ श्रियः श्रीः परमस्तेन नारायणः स्मृतः ॥
नराणां सर्व जगतामयनं शरणं हरिः।
तस्मान्नारायण इति मुनिभिः संप्रकीर्त्यते ॥ इति हारीतः।

'अरुद्रो वा सरुद्रो वा सकृत्पञ्चाक्षरेण यः।
पूजयेत्पतितो वापि मूढो वा मुच्यते नरः।
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा ॥'

भगवद्वचनादेव स्थापितम् ॥

अन्येषु च पुराणेषु बहुषु स्थलेषु ओङ्कार सयुक्तानां मन्त्राणां निवेशः कृतः। पुराणान्तर्गतानां तेषामुच्चारणे जपे वा न कस्यापि दोषः इत्यर्थमेव प्रतिपादयता भगवता कुमारिलेनोक्तं तन्त्र वार्त्तिके—

तामेव वैदिकान् वर्णान् भारतादि निवेशितान्।

स्वाध्याय नियमं हित्वा लोक बुद्ध्या प्रयुञ्जत इति यथा पूर्वं सूचितम् ॥

अन्यच्च

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्य सख्यमात्मसमर्पणम् ॥
नृणामयं परोधर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥

इति युधिष्ठिर प्रश्नोत्तरे सनातनान् धर्मान् कथयता भगवता नारदेन नवधा भक्ति साधने सर्वेषामेव नृणामधिकारो घोषितः॥

एतेषां मंत्राणां स्वरूपं तु निर्विवादम्। ॐ नमो भगवते वासुदेवाय इति द्वादशाक्षरो मन्त्रः ॐ कारसहित एव द्वादशाक्षरः, ॐ नमो नारायणाय इति अष्टाक्षरो मंत्रः ॐ कारसहित एव अष्टाक्षरः, ॐ नमः शिवाय इति शैवः षडक्षरो मन्त्रः यो हि 'लोके पंचाक्षरः स्मृतः' ॐकारसहित एव षडक्षरः॥ अपरं च यै ग्रंथैरेतेषां मंत्राणां महिमा स्थापित. तैरेव स्पष्टं प्रतिपादितं यदेते मन्त्रा यथा द्विजैस्तथा स्त्रीभिः शूद्रैश्च संकीर्णैश्चोपासितव्याः। अतः अस्मिन् विषये नास्त्यवसरो संशयस्य।

एषोऽर्थः पुराणान्तर्गतेषु बहुषु मन्त्रेषूदाहृतः। तेषां मध्ये द्वादशाक्षराष्टाक्षर षडक्षर-पञ्चाक्षर-द्व्यक्षर-मन्त्राः चतुर्भिरपि वर्णैः सामान्यतयोपास्याः सर्वेषामुपकारकाः अतस्तेषां माहात्म्यं तत्तद्विषयकाः पापसंकातानहराः पुण्यप्रदाः पावनीः ज्ञान भक्ति वैराग्य

# तस्यैकस्यैव तिस्रः संज्ञाः

## तथा च विष्णुपुराणे

सृष्टिस्थित्यंतकरणीं ब्रह्मविष्णु शिवाभिधाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥

## बृहन्नारदीयपुराणे च

वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरम् ।
उपेन्द्रं सान्द्रकारुण्यं परानन्दं परात्परम् ॥
अन्तर्यामी जगद्व्यापी सर्व साक्षी निरञ्जनः ।
भिन्नाभिन्न स्वरूपेण स्थितो वै परमेश्वरः ॥

यो ब्रह्मरूपी जगतां विधाता स एव पाता द्विजविष्णुरूपी ।
कल्पान्तरुद्राख्यतनुः स देवः शेतेऽङ्घ्रिपानस्तमजं भजामि ॥
शिवस्वरूपी शिवभक्तिभाजां यो विष्णुरूपी हरिभावितानाम् ।
संकल्प पूर्वात्मकदेह हेतुस्तमेव नित्यं शरणं प्रपद्ये ॥

नारायणोऽक्षरोऽनन्तः सर्वव्यापी निरञ्जनः ।
तेनेदमखिलं व्याप्तं जगत्स्थावरजङ्गमम् ॥
तमादिदेव मजरं केचिदाहुः शिवाभिधम् ।
केचिद्विष्णु सदा सत्यं ब्रह्माणं केचिदूचिरे ॥

## तथा च शिवपुराणे

### ज्ञान संहितायां ४ अध्याये

महेश्वर उवाच—

त्रिधा भिन्नो ह्यहं विष्णो ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निष्कलोऽयं सदा हरे ॥
अहं भवानयं चैव रुद्रोऽयं यो भविष्यति ।
एकं रूपं न भेदोऽस्ति भेदे च बंधनं भवेत् ॥
तथापीह मदीयं वै शिवरूपं सनातनम् ।
मूलभूतं सदा प्रोक्तं सत्यं ज्ञानमनन्तकम् ॥
एवं ज्ञात्वा सदा ध्येयं तत्त्व जिज्ञासुना त्वया ।
मद्दर्शने फलं यद्वै तदेव तव दर्शने ॥

को गर्भं पालयत्येनं कश्च संवर्धयत्यपि ।
जायमाने शिशौ मातुः स्तने स्तन्यं करोति कः ॥
कया शक्तया च सृज्यन्ते प्राणिनश्च द्रुमास्तथा ।
पाल्यन्ते च कया सर्वे पानभोजनसाधनैः ॥
पिपीलिकाः कया भित्तिमधिरोहन्त्यहर्निशम् ।
निराधारं कयाऽकाश उड्डीयन्ते पतत्रिणः ॥
नराणामथ नारीणां मनुष्याणां गवां तथा ।
सिंहानां हस्तिनाञ्चैव संसृष्टिः पक्षिणां कथम् ॥
मनुष्येभ्यो मनुष्या हि सिंहाः सिंहेभ्य एव च ।
अश्वेभ्यो वाजिनः गोभ्यो गावः स्युर्लोकमातरः ॥
मयूरेभ्यो मयूरा हि हंसा हंसेभ्य एव च ।
शुकाः शुकेभ्यश्चित्रेभ्यो कपोतेभ्यः कपोतकाः ॥
बीजेभ्योऽत्यल्पकायेभ्योऽचिन्त्यशक्ति प्रवर्धिता ।
वृक्षाः शश्वत्प्रजायन्ते पत्रपुष्पफलश्रियः ॥
प्राणिनां वर्धयन् सौख्य श्वसन्ति बहुलाः समाः ।
वितरन्ति च स्वादूनि रसवन्ति फलानि च ॥

'अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणो हि जीवमुपधावति यत्र यत्र।'
अत्यद्भुतेयं रचना मनोहरा सुखप्रदा राजति तत्र तत्र ॥

यत्रेदृशी ज्ञानात्मिका सार्वत्रिका समानावयवसंस्थाना सुशोभना अनंता रचना तत्र विद्यत एव कोऽपि सत् चित् आनन्द स्वरूपः सदा सर्वत्र सर्वगः अनन्त शक्ति गुण संपन्नः रचयिता इति विवशतया बुद्धिः स्वीकरोति ।

तथाहि शिवपुराणे वा० सं० पूर्व० ४ अध्याये—

अस्तिकश्चिदपर्यन्त रमणीय गुणाश्रयः ।
पतिर्विश्वस्य निर्माता पशु पाश विमोचणः ॥
अभावे तस्य विश्वस्य सृष्टिरेषा कथं भवेत् ।
अचेतनत्वादज्ञानादनयोः पशु पाशयोः ॥
प्रधान परमाण्वादि यावत् किञ्चिदचेतनम् ।
न तत्कर्तृ स्वयं दृष्टं बुद्धिमत्कारणं विना ॥
जगच्च कर्तृ सापेक्षं कार्यं सावयवं यतः ।
तस्मात्कार्यस्य कर्तृत्वं पत्युर्न पशु पाशयोः ॥

## महाभारते शांतिपर्वणि ३४१ अध्याये—

श्रीभगवानुवाच—

अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन।
तस्मादात्मानमेवाग्रे रुद्रं सपूजयाम्यहम्॥
यद्यहं नार्चयेऽय वै ईशानं वरद शिवम्।
आत्मानं नार्चयेत्कश्चिदितिमेभावितात्मनः॥
मया प्रमाणं हि कृतं लोकः समनुवर्त्तते।
पमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम्॥
यस्त वेत्ति स मां वेत्ति योऽनुत सहिमा मनु।
रुद्रो नारायणश्चैव सत्वमेकं द्विधाकृतम्॥
इति सचिंत्य मनसा पुराणं रुद्रमीश्वरम्।
पुत्रार्थमाराधितवानहमात्मानमात्मना ॥
नहि विष्णु प्रणमति कस्मैचिद्विबुधाय च।
ऋत आत्मानमेवेति ततो रुद्रं भजाम्यहम्॥
सब्रह्मका सरुद्राश्च सेन्द्रा देवाः महर्षिभिः।
अर्चयन्ति सुरश्रेष्ठं देव नारायणं हरिम्॥

तथा हि **महाभारते** अनुशासन पर्वणि—

नमस्त्वृषिभ्यः परम परेषां देवेषु देव वरद वरेण्यम।
सहस्त्रशीर्षाय नमः शिवाय सहस्रनामाय जनार्दनाय॥ इति।

अतो हि—

ॐ नमो भगवते वासुदेवाय तथा ॐ नमो नारायणाय तथा ॐ नमः शिवाय इत्यादि मंत्राणां युगपद्धारणमुदाराणां स्मार्तवैष्णव शैवशास्त्राणामनुकूलम्। अतो हि

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुख न परां गतिम्॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्ये व्यवस्थिती।
ज्ञात्वा शास्त्र विधानोक्त कर्म कर्तुमिहार्हसि॥

**इति भगवतस्त्रिभुवनगुरोरनुशासनं समुचितमानपूर्वकं मनसि निधाय सर्वभूतदयया सर्वेषामुपकारायसर्वैः धर्मोन्नतिमभीप्सद्भिः विज्ञैः शास्त्रानुकूलं मंत्राणां प्रचारः करणीयः॥**

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधी गम्यं विद्यात्तं पुरुषं परम् ॥
एतमेके वदन्त्यग्निं मनु मन्ये प्रजापतिम् ।
इन्द्रमेके परं प्राण मपरे ब्रह्म शाश्वतम् ॥ इति मनु

## तथाहि विष्णुसहस्रनाम्नि युधिष्ठिरस्य प्रश्नः

किमेकं दैवतं लोके किं वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥

## तस्योत्तरे भीष्म वचनम् ।

जगत्प्रभु देव देवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नाम सहस्रेण पुरुषः सततोत्थितः ॥
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायं स्तुवन्नमस्यंश्च यजमान स्तमेव च ॥
अनादि निधन विष्णु सर्वलोक महेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्य सर्वदु.खातिगो भवेत् ॥
ब्रह्मण्य सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथ महद्भूत सर्वभूतभवोद्भवम् ॥
परम यो महत्तेजः परम यो महत्तपः ।
परमं यो महद्ब्रह्म परम यः परायणम् ॥
पवित्राणां पवित्र यो मगलानाञ्च मगलम् ।
दैवतं देवतानां च भूतानां योऽव्यय. पिता ॥

तथा च विष्णुसहस्रनाम्नि स्तोत्रे—

पूतात्मा परमात्माच मुक्तानां परमा गतिः ।
अव्यय. पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥
योगो योगविदां नेता प्रधान पुरुषेश्वरः ।
नारसिंह वपु' श्रीमान् केशवः पुरुषोत्तमः ॥
सर्वः शर्वः शिव स्थाणुर्भूतादिर्निधिरव्यय. ।
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ॥
ईशान· प्राणदः प्राणो ज्येष्ठ श्रेष्ठः प्रजापति. ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदन· ॥

## तथा श्वेताश्वतरोपनिषदि

वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥
नैव स्त्री न पुमानेष न चैवायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते॥

स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देहो स्वगुणै र्वृणोति।
क्रियागुणैरात्मगुणैश्च तेषां संयोग हेतु रपरोऽपि दृष्टः॥
अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम्।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥

भावग्राह्य मनीडाख्यं भावाभावकरं शिवम्।
कला- सर्गकरं देवं ये विदुस्ते जहुस्तनुम्॥

## भागवते ११ स्कंधे ३ अध्याये।

राजोवाच—

नारायणाभिधानस्य ब्रह्मणः परमात्मनः।
निष्ठामर्हथ नो वक्तुं यूयं हि ब्रह्मवित्तमाः॥

### पिप्पलायन उवाच—

स्थित्युद्भव प्रलयहेतुरहेतुरस्य यत्स्वप्नजागर सुषुप्तिषु सद्बहिश्च।
देहेन्द्रिया सुहृदयानि चरन्ति येन सञ्जीवितानि तदवेहि परं नरेन्द्र।

नैतन्मनोविशतिवागुत चक्षुरात्मा प्राणेन्द्रियाणिचयथानलमर्चिषःस्वाः।
शब्दोऽपियोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः॥

सत्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं महानहमिति प्रवदन्ति जीवम्।
ज्ञान क्रियार्थ फलरूपतयोरुशक्ति ब्रह्मैवभाति सदसच्चतयोः परं यत्॥

नात्माजजाननमरिष्यतिनैधतेऽसौनक्षीयतेसवनविद्व्यभिचारिणांहि
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेनविकल्पितंसत्।

अण्डेषु पेशिषु तरुष्वविनिश्चितेषु प्राणोहि जीव मुपधावति तत्रतत्र।
सन्ने यदिन्द्रियगणेऽहमिच प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः॥

यर्ह्यब्जनामचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि।
तस्मिन्विशुद्धउपलभ्यतआत्मतत्वंसाक्षाद्यथामलदृशोः सवितृप्रकाशः।

शिवपुराणे

अनादि मल सश्लेष प्रागभाव स्वभावतः ।
अत्यंतपरिशुद्धात्मे त्यतोऽयं शिव उच्यते ॥
अथवाऽशेषकल्याणगुणैक घन ईश्वरः ।
शिव इत्युच्यते सद्भिः शिव तत्वार्थ वेदिभिः ॥

रामतापनीये

रमन्ते योगिनोऽनन्ते नित्यानंदे चिदात्मनि ।
इति रामपदे नासौ परं ब्रह्माभिधीयते ॥
रमते सर्व भूतेषु स्थावरेषु चरेषुच ।
अन्तरात्म स्वरूपेण यच्च राम. प्रकीर्त्यते ॥

भारते

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतः क्लेशनाशाय गोविंदाय नमो नमः ॥
सच्चिदानंद रूपाय विश्वोत्पत्यादिहेतवे ।
तापत्रयविनाशाय श्रीकृष्णाय वय नुम ॥

अतः ॐ नमो भगवते वासुदेवाय ॐ नमो नारायणाय ॐ नमः शिवाय श्रीरामाय नम श्रीकृष्णाय नमः

एते मन्त्रा· गृण त्येकमद्वितीयमज विभुम् ।
विश्वोत्पत्यादि कर्तार सच्चिदानद रूपिणम् ॥
नारायणो वासुदेव रुद्रो विष्णु· पितामह ।
राम. कृष्णः शिवो ह्येकः स्तूयते बहुनामभि· ॥

तथा च शिवपुराणे कैलास संहितायां ६ अध्याये—

शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः ।
ससार वैद्य. सर्वज्ञ. परमात्मेति मुख्यत ।
नामाष्टकमिदं नित्य शिवस्य प्रतिपादकम् ॥

सर्वानन शिरोग्रीवः सर्वभूत गुहाशयः।
सर्वव्यापी स भगवान् तस्मात्सर्व गतः शिवः॥
अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्॥
अणो रणीयान्महतो महीयानात्मास्य जन्तो निंहितं गुहायाम्।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमा न मीशम्॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
सर्वेन्द्रिय गुणाभासं सर्वेन्द्रिय विवर्जितम्।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं वृहत्॥
सूक्ष्माति सूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टार मनेकरूपम्।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्ति मत्यन्तमेति॥
एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः।
हृदा मनीषी मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति॥
अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः।
हृदा मनीषो मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा हृदिस्थं मनसा य एन मेवं विदुरमृतास्ते भवन्ति॥
एको देव सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्ष सर्वभूताऽधिवासः साक्षी चेता केवलो निर्गुणश्च॥
एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति।
तमात्मस्थं येनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥
नित्यो नित्यानां चेतनश्चेतनाना मेको बहूनां विदधाति कामान्।
तत्कारणं सांख्ययोगाऽधिगम्यं ज्ञात्वादेवं मुच्यते सर्वपाशैः॥
स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयम्।
धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम॥
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्ता द्विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञान बल क्रिया च॥
न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिंगम्।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः॥

ममैव हृदये विष्णुः विष्णोश्च हृदये ह्यहम्।
उभयोरन्तरं यो वै न जानाति मतो मम॥

## तत्रैव शिवपुराणे

### ज्ञा. सं. ५ अध्याये विष्णुं प्रति

महेश्वर उवाच—

मम ध्येय भवांश्चैव तव ध्येयमहं पुनः।
आवयोरन्तरं नैव ह्यणुमात्रं विचारतः॥
त्वाञ्च समाश्रिता ये वै मामेव समुपाश्रिताः।
अन्तरं यश्च जानाति निरये पतति ध्रुवम्॥

श्रीहरिः-उवाच—

शङ्कर श्रूयतां मत्तः, कृपासिन्धो जगत्पते।
मम ध्येयः सदा त्वञ्च भविष्यसि न चान्यथा॥
भवतः सर्वसामर्थ्यं लब्धं चैव पुरा मया।
क्षणमात्रमपि च ते ध्यानं वै परमात्मनः।
चेतसो दूरतश्चैव मा गच्छतु कदाचन॥

तथा च—

### भागवते ४ स्कं. ७ अध्याये

श्रीभगवानुवाच—

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्।
आत्मेश्वर उपद्रष्टा स्वयंदृगविशेषणः॥
आत्ममायां समाविश्य सोऽहं गुणमयीं द्विज।
सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां क्रियोचिताम्॥
तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि।
ब्रह्म रुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति॥
यथा पुमान्न स्वांगेषु शिरः पाण्यादिषु क्वचित्।
पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः॥
त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमुपगच्छति॥

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै स्तपसा कर्मणा वा ।
ज्ञान प्रसादेन विशुद्ध सत्त्व स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥
एषोऽणु रात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश ।
प्राणै श्चित्तंसर्वमोत प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥

अत्र वै याज्ञवल्क्यः—

द्वासप्तति सहस्राणि हृदयादभिनिःसृताः ।
हिताऽहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् ।
मण्डलं तत्र मध्यस्थ आत्मादीप इवाचलः ।
सज्ञेयस्तं विदित्वेह पुनराजायते न तु ॥
अनन्य विषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥

भागवते—

अथोक्तजालम्भमिहाऽशुभात्मनः शरीरिणः संसृति चक्रशातनम् ।
तद्ब्रह्मनिर्वाण सुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥
कोऽति प्रयासोऽसुर बालका हरे रुपासने स्वे हृदिच्छिद्रवत्सतः ।
स्वस्यात्मनः सख्युरशेष देहिनां सामान्यतः किं विषयोपपादनैः ॥

## साकारध्यानम्

भागवते—

केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशंखं गदाधरं धारणया स्मरन्ति ॥
प्रसन्न वक्त्रंनलिनायतेक्षणं कदंब किंजल्क पिशंगवाससम् ।
लसन् महारत्न हिरण्मयाङ्गदं स्फुरन् महारत्न किरीट कुण्डलम् ॥
अदीन लीला हसितेक्षणोल्लसद् भ्रूभङ्ग संसूचित भूर्यनुग्रहम् ।
ईक्षेत चिन्तामय मेनमीश्वरं यावन्मनो धारणयावतिष्ठते ॥
एकैकशोऽङ्गानिधियानुभावयेत्पादादि यावद्धसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्परं परं शुद्ध्यति धीर्यथा यथा ॥
यावन्न जायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत ॥
भगवान् सर्वभूतेषु लक्षितः स्वात्मनाहरिः ।
दृश्यैर्बुध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥

सच्चिदानंदरूपाय विश्वोत्पत्यादि हेतवे ।
तापत्रय विनाशाय श्रीकृष्णाय वयं नुमः ॥

# किं रूपं परमात्मनः ।

तत्रभागवते—

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग हेतु र्व्यापको ऽसंग्यनावृतः ॥
एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रय ।
सर्वगोऽनावृतः साक्षी निरात्मात्मात्मन परः ॥

## शिवपुराणे वायवीयसंहितायां पूर्वभागे ४ अध्याये

ऋषय ऊचुः—

बुद्धीन्द्रियशरीरेभ्यो व्यतिरिक्तस्य कस्यचित् ।
आत्मशब्दाभिधेयस्य वस्तुतोऽपि कुतः स्थिति. ॥

गुरुवाच—

बुद्धीन्द्रियशरीरेभ्यो व्यतिरिक्तो विभुर्ध्रुव ।
अस्त्येव कश्चिदात्मेति हेतुस्तत्र सुदुर्गमः ॥
बुद्धीन्द्रियशरीराणां नात्मता सद्भिरिष्यते ।
स्मृते रनियतज्ञाना दयावद्देहवेदनात् ॥
अतः स्मर्तानुभूतानामशेषज्ञेयगोचरः ।
अन्तर्यामीति वेदेषु वेदान्तेषु च गीयते ॥
सर्वं तत्र स सर्वत्र व्याप्य तिष्ठति शाश्वत. ।
तथापि क्वापि केनापि व्यक्तमेष न दृश्यते ॥
नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ।
मनसैव प्रदीप्तेन महानात्माऽवसीयते ॥
न च स्त्री न पुमानेष नैव चापि नपुंसकः ।
नैवोर्द्धं नापि तिर्यक् च नाधस्तात्र कुतश्चन ॥
अशरीरं शरीरेषु चलेषु स्थाणुमव्ययम् ।
सदा पश्यति तं धीरो नरः प्रत्यवमर्शनात् ॥

नारद उवाच—

धर्म मूलं हि भगवान् सर्ववेदमयो हरिः ।
स्मृतं च तद्विदां राजन् येन चात्मा प्रसीदति ॥
सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्म समर्पणम् ॥
नृणामयं परोधर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥

अतश्च गीतायां—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥

तथा च भागवते—

नाति प्रसीदति तथोपकृतोपचारैराराधितः सुरगणैर्हृदियद्धकामैः ।
यत्सर्वभूतदययाऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥

### अतएव महर्षेर्व्यासस्य प्रार्थना

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाग्भवेत् ॥

### भगवतश्चरमोपदेशः

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥

# अथ कथा भागः।

## पद्मपुराणे

### वासुदेवाभिधान स्तोत्रम्

द्वादशाक्षरो मंत्रः सर्वैर्वर्णैर्जपनीयः।

सुबाहुरुवाच—

वासुदेवाभिधानं यत्पूर्वमुक्तं हि ब्राह्मणैः।
श्रोष्याम्यहं यदा भद्र गतिं स्वां प्राप्नुयां तदा॥
पुण्यात्मना भावित वै मुनिना संयतात्मना॥
तदाहं पातकान्मुक्तो भविष्यामि न संशयः।

विज्वल उवाच—

तवार्थे पृच्छितस्तातस्तेन मे कथित च यत्।
तत्तेऽद्याहं प्रवक्ष्यामि शाश्वतं शृणु सत्तम॥

ॐ अस्य श्रीवासुदेवाभिधानस्तोत्रस्यानुष्टुप्छन्दः नारद ऋषिः
ओङ्कारो देवता सर्वपातकनाशाय चतुर्वर्गसाधनार्थे च विनियोगः॥

ॐ नमो भगवते वासुदेवाय इति मंत्रः।

परमं पावनं पुण्य वेदज्ञ वेदमन्दिरम्।
विद्याधार मखाधारं प्रणवं तं नमाम्यहम्॥
निराधारं निराकार सुप्रकाश महोदयम्।
निर्गुण गुणकर्त्तार नमामि प्रणवं परम॥
गायत्री साम गायन्तं गीतज्ञं गीतसुप्रियम्।
गन्धर्व गीत भोक्तार प्रणव तं नमाम्यहम्॥
महाकान्तं महोत्साह महामोहविनाशनम्।
अचिन्त्यन्त जगत्सर्वं गुणातीत नमाम्यहम॥
भाति सर्वत्र यो भूत्वा भूतानां भूतिवर्द्धनः।
समभागाय सद्धर्मं नमामि प्रणव परम्॥
विचार वेदरूप तं यज्ञाख्य यज्ञवल्लभम्।
योनिं सर्वस्य लोकस्य ओङ्कारं प्रणमाम्यहम्॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्त मनुभाति सर्वं तस्य भासा सर्वमिद विभाति ॥

बृहदारण्यके ।

स वा एष महानज आत्मा योऽय विज्ञानमय. प्राणेषु य एषो-ऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः ।

अयमात्मा सर्वेषां भूतानां मध्वस्यात्मन. सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद ब्रह्मेद सर्वम्॥

छान्दोग्ये ।

स वा अयमात्मा सर्वेषां भूताना मधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवा. सर्वे लोकाः सर्वे प्राणा. सर्व एव आत्मनः समर्पिताः ॥

य आत्मापहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सो-ऽपिपास. सत्यकाम. सत्य सङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्त मात्मान मनुविद्य विजनाति इति ।

तैत्तरीये ।

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नय पुरुषो मनोमयः । अमृतो हिरण्मयः ॥

मुण्डकोपनिषत् ।

'प्राणो ह्येष यः सर्वभूते र्विभाति विजानन्विद्वान्भवते नातिवादी ।
आत्मक्रीड आत्मरतिः क्रियावा नेष ब्रह्मविदां वरिष्ठः ॥
सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥
सत्यमेव जयते नाऽनृतं सत्येन पथा विततो देवयान ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परम निधानम् ॥
बृहच्च तद्दिव्यमचिन्त्य रूपं सूक्ष्माच्च तत्सूक्ष्मतर विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहित गुहायाम् ॥

तेजः स्वरूपेण बिभर्त्ति लोकान्सर्वान्समस्तान्सचराचरस्य।
निष्केवलो ज्ञानमयः सुशुद्धस्तं वासुदेवं शरणं प्रपद्ये॥
दैत्यान्तकं दुःखविनाशमूलं शान्तं परं शक्तिमयं विशालम्।
संप्राप्य देवा विलयं प्रयान्ति तं वासुदेवं शरणं प्रपद्ये॥
सुखं सुखान्तं सुहृदं सुरेशं ज्ञानार्णवं तं सुहितं हितं च।
सत्याश्रयं सत्यगुणोपविष्टं तं वासुदेवं शरणं प्रपद्ये॥
यज्ञस्वरूपं पुरुषार्थरूपं सत्यान्वितं माधपतिमेव पुण्यम्।
विज्ञानमेत जगतां निवासं त वासुदेवं शरणं प्रपद्ये॥
अम्भोधिमध्ये शयनं हि यस्य नागाङ्गभोगे शयने विशाले।
श्रीः पादपद्मद्वयमेव सेवते त वासुदेवं शरणं प्रपद्ये॥
पुण्यान्वित शङ्करमेव नित्यं तीर्थैरनेकैः परिसेव्यमानम्।
तत्पादपद्मद्वयमेव तस्य श्रीवासुदेवस्य नमामि नित्यम्॥
देवैः सुसिद्धैर्मुनिभिः सदैव नुतं सुभक्त्या उरगाधिपैश्च।
तत्पादपङ्केरुहमेव पुण्यं श्रीवासुदेवस्य नमामि नित्यम्॥
यस्यापि पादाम्भसि मज्जमानाः पूता दिवं यान्ति विकल्मषास्ते।
मोक्ष लभन्ते मुनयः सुतुष्टास्त वासुदेवं शरणं प्रपद्ये॥
पादोदकं तिष्ठति यत्र विष्णोर्गङ्गादितीर्थानि सदैव तत्र।
त्यजन्ति प्राणांश्च अपापदेहाः प्रयान्ति शुद्धाः सुगृहं मुरारेः॥
पादोदकेनाप्यभिषिच्यमाना अत्युग्रपापैः परिलिप्तदेहाः।
ते यान्ति मुक्तिं परमेश्वरस्य तस्यैव पादौ सततं नमामि॥
नैवेद्यमात्रेण सुभक्षितेन सुचक्रिणस्तस्य महात्मनश्च।
ते वाजपेयस्य फलं लभंते सर्वार्थयुक्ताश्च नरा भवन्ति॥
नारायणं दुःखविनाशनं तं मायाविहीनं सकलं गुणज्ञम्।
यं ध्यायमानाः सुगतिं व्रजन्ति तं वासुदेवं सततं नमामि॥

यो वन्द्यस्त्वृषिसिद्धचारणगणैर्देवैः सदा पूज्यते।
यो विश्वस्य हि सृष्टिहेतुकरणे ब्रह्मादिकानां प्रभुः।
यः संसारमहार्णवे निपतितस्योद्धारको वत्सल-
स्तस्यैवापि नमाम्यहं सुचरणौ भक्त्या धरौ साधकौ॥

यो दृष्टो निजमण्डपे सुरगणैः श्रीवामनः सामगः
सामोद्गीतकुतूहलः सुरगणैस्त्रैलोक्य एकः प्रभुः।
कुर्वंस्तु ध्वनितैः स्वकैर्गतभयान्यः पापभीतान् रणे
तस्याहं चरणारविन्द युगलं वन्दे पर पावनम्॥

तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥
तमेवात्मानमात्मस्थं सर्वभूतेष्वस्थितम्।
पूजयध्वं गृणन्तश्चध्यायन्त श्चासकृद्धरिम् ॥

तथा च गीतायाम्—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥
ज्योतिषामपि तज्ज्योतिस्तमसःपरमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्यधिष्ठितम् ॥

---

## सनातन धर्म मूलम्

भगवान् वासुदेवो हि सर्वभूतेष्ववस्थितः।
एतज्ज्ञानं हि सर्वस्य मूलं धर्मस्य शाश्वतम् ॥

अतो हि महर्षिणा व्यासेनोक्तम्—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥
जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यंप्रघातयेत्।
यद्यदात्मनि चेच्छेत तत्परस्यापि चिन्तयेत् ॥

पुनरेव भारते—

एष धर्मो महायोगो दानं भूतदया तथा।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा।
सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥

तथा श्रीमद्भागवते ७ स्कन्धे ११ अध्याये

## सनातनधर्म निरूपणम्

युधिष्ठिर-उवाच।

भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम्।
वर्णाश्रमाचारयुतं यत्पुमान् विन्दते परम् ॥

वासुदेव उवाच—

सत्ये युगे महाराज यदाप्नोष्यति मानवः।
तदा मोक्षं प्रदास्यामि तत्क्षणान्नात्र संशयः॥
त्रेतायां मासमात्रेण मासषट्केन द्वापरे।
वर्षैकेण कलौ प्राप्ते ये जपन्ति च मानवाः॥
स्वर्गं यास्यन्ति राजेन्द्र वैष्णवं गतिदायकम्।
त्रिकालमेककालं वा स्नातो जपति ब्राह्मणः॥
यं यं तु वाञ्छते कामं स स तस्य भविष्यति।
क्षत्रियो जयमाप्नोति धनधान्यैरलंकृतः॥
वैश्यो भविष्यति श्रीमान् शूद्रः सुखमवाप्नुयात्।
अथ यः श्रावयेत्स्तोत्रं पापान्मुक्तो भविष्यति॥
श्रावको नरकं घोरं कदाचिन्नैव पश्यति।
मम स्तोत्र प्रसादाच्च सर्वसिद्धो भविष्यति॥
विषमे दुर्गसंस्थाने सिंहव्याघ्रभयेषु च।
चौराणां संकटे प्राप्ते तत्र स्तोत्रमुदीरयेत्॥
तत्राभयं महाराज स्तोत्रपाठाद् भविष्यति।
अशेषेष्वेव दुर्गेषु राजद्वारे गते नरे॥
कलौ युगेऽपि संप्राप्ते स्तोत्रे दास्यं प्रयास्यति।
वेदभङ्गप्रसङ्गेन यस्य कस्य न दीयते॥
पुण्यो धन्यः स वै दाता पुत्रवान् हि भविष्यति।
मम स्तोत्रं पठेयस्तु नात्र कार्या विचारणा॥

इति श्रीमहापुराणे पाद्मे भूमिखंडे नवनवतितमोऽध्यायः॥

---

## द्वादशाक्षरमंत्रयोर्महिमा

### श्रीमद्भागवते—नारायणकवचे

राजोवाच—

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान्।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम्॥ १॥
भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम्।
यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे॥ २॥

प्रतिज्ञा च

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रति जानीहि न मे भक्तः प्रणश्यति ॥
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

इति भगवदुपदेशः सर्वेषु देशेषु प्रचारणीयः भगवतः प्रतिज्ञा च घोषणीया ।

अनुकूलं चास्य प्रयत्नस्यैष समयः ।

तद्यथा पद्मपुराणे भक्तिंप्रति नारदवचनम्—

कलिना सदृशः कोऽपि युगो नास्ति वरानने ।
तस्मिंस्त्वां स्थापयिष्यामि गेहे गेहे जने जने ॥
अन्य धर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् ।
तदा नाहं हरेर्दासो यदि त्वां न प्रवर्तये ॥
त्वदन्विताश्च ये जीवा भविष्यन्ति कलाविह ।
पापिनोऽपि गमिष्यन्ति निर्भयं कृष्ण मन्दिरम् ॥

अतः अखिलेषु नरेषु नारीषु च शिक्षा सर्वार्थ साधिका भगवद्भक्तिरुत्पादनीया संवर्धनीया च । लोकद्वयसाधकः धर्मार्थदः पापनुत् अभ्युदय निःश्रेयसकरः सनातनो धर्मः सिद्ध्यसिद्ध्योर्निर्विकारैः मुक्तसंगैरनहं वादिभिः धृत्युत्साहसमन्वितैः सर्वैरपि धर्मचारिभिः ज्ञानिभिश्च प्रचारणीयः । सर्वैरपि सनातनस्य धर्मस्य परिज्ञाने आचरणे प्रचारे च अहरहः यत्नः करणीयः । अनया रीत्या च सर्वभूताऽधिवासः सर्वेषां स्रष्टा सर्वेषां पिता सर्वेषां शरणं सर्वेषां सुहृत् परमात्मा परितोषणीयः ॥

इतीयं व्यासशिष्यस्य भारद्वाजस्य प्रार्थना ।
पादयो र्पिता शम्भोः भूयाल्लोकपयस्विनी ॥.
श्रीकृष्णार्पणमस्तु ॥

धन्वन्तरिर्भगवान्पात्वपथ्याद् द्वन्द्वाद्भयादृषभो निर्जितात्मा।
यज्ञश्च लोकादयताज्जनान्ताद्बलो गणात्क्रोधवशादहीन्द्रः ॥१८॥
द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखण्ड गणात्प्रमादात्।
कल्किः कले कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥१९॥
मां केशवो गदया प्रातरव्याद्गोविन्द आसंगवमात्तवेणुः।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्र पाणिः ॥२०॥
देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम्।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥२१॥
श्रीवत्सधामापररात्र ईश· प्रत्यूष ईशोऽसिधरोजनार्दन·।
दामोदरोऽव्यादनुसन्ध्य प्रभाते विश्वेश्वरो भगवान् कालमूर्त्तिः ॥२२॥
चक्रं युगान्तानलतिग्मनेमि भ्रमत्समन्ताद्भगवत्प्रयुक्तम्।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्ष यथा वातसखो हुताशः ॥२३॥
गदेऽशनिस्पर्शन विस्फुलिङ्गे निष्पिढि निष्पिण्ढ्यजितप्रियासि।
कूष्माण्ड वैनायक यक्षरक्षो भूतग्रहांश्चूर्णय चूर्णयारीन् ॥२४॥
त्वं यातुधान प्रमथप्रेतमातृ पिशाच विप्रग्रह घोर दृष्टीन्।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥२५॥
त्वं तिग्मधारासि वरारिसैन्यमीशप्रयुक्ता मम छिन्धि छिन्धि।
चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥२६॥

यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥२७॥
सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात्।
प्रयान्तु संक्षयं सद्यो ये न· श्रेय· प्रतीपकाः ॥२८॥
गरुडो भगवान् स्तोत्रस्तोभः छन्दोमयः प्रभुः।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥२९॥
सर्वापद्भ्योहरेर्नामरूपयानाऽयुधानि नः।
बुद्धीन्द्रियमनः प्राणान् पान्तु पार्षद भूषणा· ॥३०॥
यथा हि भगवानेव वस्तुत सदसच्च यत्।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥३१॥
यथैकात्म्यानुभावनां विकल्प रहितः स्वयम्।
भूषणायुध लिङ्गाख्या धत्ते शक्तीः स्वमायया ॥३२॥
तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः।
पातु सर्वैः स्वरूपैर्न सदा सर्वत्र सर्वग ॥३३॥

तारकं सर्वलोकानां नौरूपेण विराजितम् ।
संसारार्णवमग्नानां नमामि प्रणतं हरिम् ॥
वसते सर्वभूतेषु एकरूपेण नैकधा ।
धामकैवल्यरूपेण नमामि वरदं सुखम् ॥
सूक्ष्मं सूक्ष्मतरं शुद्धं निर्गुणं गुणनायकम् ।
वर्जितं प्राकृतैर्भावैर्वेदाख्यं तं नमाम्यहम् ॥
देवदैत्यवियोगैश्च वर्जितं तुष्टिभिस्तथा ।
वेदैश्च योगिभिर्ध्येयं तमोंकारं नमाम्यहम् ॥
व्यापकं विश्ववेत्तारं विज्ञान परम पदम् ।
शिवं शिवगुणं शान्तं वन्दे प्रणवमीश्वरम् ॥
यस्य मायां प्रविष्टास्तु ब्रह्माद्याश्च सुरासुराः ।
न विन्दन्ति पर शुद्धं मोक्षद्वार नमाम्यहम् ॥

आनन्दकन्दाय च केवलाय शुद्धाय हंसाय परावराय ।
नमोऽस्तु तस्मै गुणनायकाय श्रीवासुदेवाय महाप्रभाय ॥
श्री पाञ्चजन्येन विराजमान रविप्रभेणापि सुदर्शनेन ।
गदाख्यकेनापि विशोभमान विष्णु सदैवं शरण प्रपद्ये ॥
यं वेदकोशं सुगुण गुणानामाधारभूतं सचराचरस्य ।
यं सूर्यवैश्वानर तुल्यतेजसं तं वासुदेवं शरणं प्रपद्ये ॥
तमोघनानां निकरैः प्रकाश करोति नित्यं यति धर्महेतुम ।
उःद्योतमानं रवितेजसोद्भ्वं तं वासुदेवं शरणं प्रपद्ये ॥
सुधानिधानं विमलांशुरूपमानन्दमानेन विराजमानम् ।
यं प्राप्य जीवन्ति सुरादिलोकास्तं वासुदेवं शरणं प्रपद्ये ॥
यो भाति सर्वत्र रविप्रभावैः करोति शोषं च रसं ददाति ।
यः प्राणिनामन्तरगः सवायुस्तं वासुदेवं शरणं प्रपद्ये ॥
ज्येष्ठस्तु रूपेण स देवदेवो बिभर्ति लोकान्स्वकमात्मदाम्ना ।
एकार्णवे नौरिव वर्तते यस्तं वासुदेवं शरणं प्रपद्ये ॥
अन्तर्गतो लोकमयः सदैव भवत्यसौ व्यापकजङ्गमानाम् ।
व्याहासुतो देवगुणस्य हेतुस्तं वासुदेवं शरणं प्रपद्ये ॥
रत्नैः सुपुण्यैः सकलैस्तु पुरः स सौम्यरूपैर्गुणविस्तलोके ।
रसाधिपो निर्मलतेजसैव तं वासुदेवं शरणं प्रपद्ये ॥
कलयैव सर्वं विनाशहेतुः सर्वाधिपः सर्वमयः स सर्वः ।
विना हृषीकैर्विषयान्भुनक्ते तं वासुदेवं शरणं प्रपद्ये ॥

आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम्।
आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥२३॥

कश्यप उवाच—

एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः।
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥२४॥
फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः।
अर्चयेदरविन्दाक्षं भक्त्या परमयान्वितः ॥२५॥
सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया।
यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ॥२६॥
त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता।
उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥२७॥
निर्वर्तितात्मनियमो देवमर्चेत्समाहितः।
अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ॥२८॥
नमस्तुभ्यं भगवते पुरुषाय महीयसे।
सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥२९॥
नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च।
चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥३०॥
नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥३१॥
नमः शिवाय रुद्राय नमः शक्ति धराय च।
सर्वविद्याधिपतये भूतानां पतये नमः ॥३२॥
नमो हिरण्यगर्भाय प्राणाय जगदात्मने।
योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥३३॥
नमस्ते आदिदेवाय साक्षिभूताय ते नमः।
नारायणाय ऋषये नराय हरये नमः ॥३४
नमो मरकतश्यामवपुषेऽधिगतश्रिये।
केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥३५॥
त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ।
अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥३६॥
अन्ववर्तन्त यं देवाः श्रीश्चतत्पादपद्मयोः।
स्पृहयन्त इवामोदं भगवान् मे प्रसीदताम् ॥३७॥

राजन्तं निजमण्डले मखमुखे ब्रह्मश्रिया पूजितं
दिव्येनापि स्वतेजसा करमयं यं चन्द्रनीलोपमम् ।
देवानां हितकाम्यया सुतनुजं वैरोचनस्यार्भकं
दासत्वं मम दीयतां सुरपते वन्दे परं वामनम् ॥
तं दृष्ट्वा रविमण्डले मुनिगणैः संप्राप्तवन्तं दिवं
चन्द्रार्कौ तु तपन्तमेवसहसा संप्राप्तवन्तौ सदा ।
तस्यैवापि सुचक्रिणः सुरगणाः प्रापुर्लयं साम्प्रतं
काये विश्वविकोशके तमतुलं नौमि प्रभुं विक्रमम् ॥
इति श्रीमहापुराणे पाद्मे गुरुतीर्थे ऽष्टनवतितमोऽध्यायः ॥

विष्णुरुवाच—
स्तोत्रं पवित्रं परमं पुराणं पापापहं पुण्यमयं शिवं च ।
धन्यं सुसूक्तं परमं सुज्ञाप्य निशम्य राजन् स सुखी बभूव ॥
गता सुतृष्णा क्षुधया समेता देवोपमो भूमिपतिर्बभूव ।
भार्या च राज्ञः सुभगा बभूव जातावुभौ पापविमुक्त देहौ ॥
हरिस्तु देवः प्रभुराविरासीद् विप्रैः सुपुण्यैर्हरिभक्तियुक्तैः ।
आगम्य भूपं गतकल्मषं तं श्रीशंखचक्राब्जगदासिधर्त्ता ॥

हरिरुवाच—
वासुदेवाभिधानं यन्महापातकनाशनम् ।
भवता विज्वलात्पुण्याच्छ्रुतं राजन्विकल्मषम् ॥
तेन त्वं मुक्तिभागी च संजातो नात्र संशयः ।
मम लोके प्रभुंक्ष्व त्वं दिव्यान्भोगान्मनोऽनुगान् ॥
× × × ×

सुबाहुरुवाच—
यदि देव वरो देयो मह्यं दीनाय वै त्वया ।
विज्वलाय प्रयच्छ त्वं प्रथमं वरमुत्तमम् ॥

हरिरुवाच—
विज्वलस्य पिता पुण्यः कुञ्जलो ज्ञानपण्डितः ।
वासुदेव महास्तोत्रं नित्यं जपति भूतले ॥
पुत्रैश्च प्रियया चैव समेतो मां प्रपश्यति ।
यश्चैवं जपति स्तोत्रं तस्य दास्ये महत्फलम् ॥
पद्ममुखे शुभे वाक्ये राजा वैष्णवमब्रवीत् ।
इदं स्तोत्रं महापुण्यं परमं कुरु वैष्णव ॥

आचार्यं ज्ञानसंपन्नं वस्त्राभरण हेतुभिः।
तोषयेद्दृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥५३॥
भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते।
अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ॥५४॥
दक्षिणां गुरवेदद्यादृत्विग्भ्यश्च यथार्हतः।
अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान् ॥५५॥
भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु च।
विष्णोस्तत्प्रीणनं विद्वान् भुञ्जीत सहबन्धुभिः ॥५६॥
नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः।
कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥५७॥
एतत्पयोव्रतं नाम पुरुषाराधनं परम्।
पितामहेनाभिहितं मया ते समुदाहृतम् ॥५८॥
त्वं चानेन महाभागे सम्यक् चीर्णेन केशवम्।
आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥५९॥
अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम्।
तपः सारमिदं भद्रे दानं चेश्वरतर्पणम् ॥६०॥
त एव नियमाः साक्षात्त एव च यमोत्तमाः।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोऽक्षजः ॥६१॥
तस्मादेतद् व्रतं भद्रे प्रयता श्रद्धया चर।
भगवान्परितुष्टस्ते वरानाशु विधास्यति ॥६२॥

इति श्रीम० भा० अष्टमस्कन्धेऽदितिपयोव्रतंनाम १६–अ० ॥

## द्वादशाष्टाक्षर
## मंत्रौ सर्वैरेव जपनीयौ इति

## विष्णुधर्मेतिलद्वादशीव्रत माहात्म्ये।

वज्रउवाच—

एकामुपोष्य कृष्णां यां द्वादशीं विधिना नरः।
महाफलमवाप्नोति तन्ममाचक्ष्व भार्गव ॥

मार्कण्डेय उवाच—

माघ्यां तु समतीतायां श्रवणेन तु संयुता।
द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी॥

श्रीशुक उवाच—

वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते ।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥

विश्वरूप उवाच—

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्ग करन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥
नारायणमयं वर्म संनह्येद् भय आगते ।
पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥
मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ।
ॐ नमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥
करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ।
प्रणवादि यकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥ ७ ॥
न्यसेद्धृदय ओङ्कारं विकारमनु मूर्द्धनि ।
षकारन्तु भ्रुवोर्मध्ये णकारं शिखयादिशेत् ॥ ८ ॥
वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ।
मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः ॥ ९ ॥
सविसर्गं फडन्तं तत्सर्वदिक्षु विनिर्दिशेत् ।
ॐ विष्णवे नम इति ॥१०॥
आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् ।
विद्या तेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥११॥

ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रि पद्मः पतगेन्द्र पृष्ठे ।
दरारि चर्मासि गदेषु चाप पाशान्दधानोऽष्ट गुणोऽष्टबाहुः ॥१२॥
जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यः वरुणस्य पाशात् ।
स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥१३॥
दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान् नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१४॥
रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् ॥१५॥
मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१६॥
सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥१७॥

पुर विलिख्य भो विप्रास्तीरे तस्य महोदधे ।
मध्ये तत्र लिखेत्पद्ममष्टपत्र सकर्णिकम् । २ ॥
पत्र मण्डलमालिख्य पूजयेत्तत्र भो द्विजा ।
अष्टाक्षर विधानेन नारायणमज विभुम् ॥ ३ ॥
अत पर प्रवक्ष्यामि कायशोधनमुत्तमम् ।
अकार हृदये ध्यात्वा चक्ररेखासमन्वितम् ॥ ४ ॥
ज्वलन्त त्रिशिख चैव दहन्त पापनाशनम् ।
चन्द्रमण्डलमध्यस्थ राकार मूर्ध्नि चिन्तयेत् ॥ ५ ॥
शुक्लवर्णं प्रवर्षन्तममृत सावयन्महीम् ।
एव निर्धूतपापस्तु दिव्यदेहस्ततो भवेत् ॥ ६ ॥
अष्टाक्षर ततो मन्त्र न्यसेदेवाऽऽत्मनो बुध ।
वामपाद समारभ्य क्रमशश्चैव विन्यसेत् ॥ ७ ॥
पञ्चाङ्ग वैष्णव चैव चतुर्व्यूह तथैव च ।
करशुद्धि प्रकुर्वीत मूलमन्त्रेण साधक ॥ ८ ॥
एकैक चैव वर्णं तु अङ्गुलीषु पृथक्पृथक् ।
ओंकार पृथिवी शुक्ला वामपादे तु विन्यसेत् ॥ ९ ॥
नकार शाभव श्यामो दक्षिणे तु व्यवस्थित ।
मोकार कालमेवाऽऽहुर्वामकट्या निधापयेत् ॥१०॥
नाकार सर्वबीज तु दक्षिणस्या व्यवस्थित ।
राकारस्तेन इत्याहुर्नाभिदेशे व्यवस्थित ॥११॥
वायव्योऽय यकारस्तु वामस्कन्धे समाश्रित ।
णाकार सर्वगो ज्ञेयो दक्षिणांशे व्यवस्थित ॥१२॥
यकारोऽय शिरस्थश्च यत्र लोका प्रतिष्ठिता ।

ॐ विष्णवेनम शिर । ॐ ज्वलनाय नम शिखा । ॐ विष्णवेनम कवचम् । ॐ विष्णवे नम स्फुरण दिशोव धाय । ॐ हुफन्अस्त्रम् । ॐ शिरसि शुक्लो वासुदेव इति । ॐ आ ललाटे रक्त सकर्षणो गद त्मा वह्निस्तेज आदिस्तेज आदित्य इति । ॐ आ ग्रीवाया पीत प्रद्युम्नो वायुमेघ इति ॥ ॐ आ हृदये कृष्णोऽनिरुद्ध सर्वशक्तिसमन्वित इति । एव चतुर्व्यूहमात्मान कृत्वा तत कर्म समाचरेत् ॥१३॥

ममाग्रेऽवस्थितो विष्णु पृष्ठतश्चापि केशव ।
गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदन ॥१४॥

विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्त समस्ततेजाः ॥३४॥
मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुर यूथपान् ॥३५॥
एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा या संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥३६॥
न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३७।
इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः ।
योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३८॥
तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथस्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३९॥
गगनान्न्यपतत्सद्यः सविमानो ह्यवाक् शिराः ।
स वालखिल्य वचनादस्थीन्यादाय विस्मितः ।
प्रास्य प्राची सरस्वत्यां स्नात्वा धाम समन्वगात् ॥४०॥

श्रीशुक उवाच—

य इदं शृणुयात्काले यो धारयति चादृतः ।
तन्नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥४१॥
एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नारायण वर्म कथनं नामाऽष्टमोऽध्यायः ॥

---

## तत्रैव अदितिपयोव्रत कथायाश्च ।

कश्यपउवाच—

उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ।
सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥२०॥
स विधास्यति ते कामान्हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥२१॥

अदितिरुवाच—

केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ।
यथा मे सत्यसंकल्पो विदध्यात्स मनोरथम् ॥२२॥

मधुपर्कमन्त्रः—

मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं तव । मया निवेदितं भक्त्या गृहाण पुरुषोत्तम । ओं नमो नारायणाय नमः ॥२८॥

आचमनीय मन्त्रः—

मन्दाकिन्याः सितं वारि सर्वपापहरं शिवम् । गृहाणाऽचमनीयं त्वं मया भक्त्या निवेदितम् । ओं नमो नारायणाय नमः ॥२६॥

स्नानमन्त्रः—

त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेवच । लोकेश वृत्तिमात्रेण वारिणा स्नापयाम्यहम् । ओं नमो नारायणाय नमः ॥३०॥

वस्त्रमन्त्रः—

देवतत्त्वसमायुक्त यज्ञवर्णसमन्वित । स्वर्णवर्णप्रभे देव वाससी तव केशव । ओं नमो नारायणाय नमः ॥३१॥

विलेपनमन्त्रः—

शरीरं ते न जानामि चेष्टां चैव च केशव । मया निवेदितो गन्धः प्रतिगृह्य विलिप्यताम् । ओं नमो नारायणाय नमः ॥३२॥

उपवीतमन्त्रः—

ऋग्यजुः साममन्त्रेण त्रिवृत पद्मयोनिना । सावित्रीग्रन्थिसंयुक्त मुपवीतं तवार्पये । ओं नमो नारायणाय नमः ॥३३॥

अलङ्कारमन्त्रः—

दिव्यरत्नसमायुक्त वह्निभानुसमप्रभ । गात्राणि तव शोभन्तु सालंकाराणि माधव । ओं नमो नारायणाय नमः ॥

ओं नम इति प्रत्यक्षर समस्तेन मूलमन्त्रेण वा पूजयेत् ।

धूपमन्त्रः—

वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिश्च ते । मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् । ओं नमो नारायणाय नमः ॥३६॥

दीप मन्त्रः—

सूर्यचन्द्रमसो ज्योतिर्विद्युदग्न्योस्तथैव च । त्वमेव ज्योतिषां देव दीपोऽयं प्रति गृह्यताम् । ओं नमो नारायणाय नमः ॥३७॥

नैवेद्यमन्त्रः—

अन्नं चतुर्विधं चैव रसैः षड्भिः समन्वितम् । मया निवेदित भक्त्या नैवेद्यं तव केशव । ओं नमो नारायणाय नमः ॥३८॥

एतैर्मन्त्रैर्हृषीकेशमावाहन पुरस्कृतम् ।
अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥३८॥
अर्चित्वा गन्धमाल्याद्यैः पयसा स्नपयेद्विभुम् ।
वस्त्रोपवीताभरण पाद्योपस्पर्शनैस्ततः ।
गन्ध धूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥३९॥
शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ।
ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥४०॥
निवेदितं तद् भक्ताय दद्याद् भुञ्जति वा स्वयम् ।
दत्त्वाचमनमर्चित्वा ताम्बूलं च निवेदयेत् ॥४१॥
जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ।
कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा ॥४२॥
कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः ।
द्व्यवरान् भोजयेद्विप्रान् पायसेन यथोचितम् ॥४३॥
भुञ्जीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ।
ब्रह्मचार्यथतद्रात्र्यां श्वो भूते प्रथमेऽहनि ॥४४॥
स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ।
पयसा स्नापयित्वार्चेद्यावद्व्रत समापनम् ॥४५॥
पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः ।
पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥४६॥
एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ।
हरेराराधन होममर्हणं द्विजतर्पणम् ॥४७॥
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ।
ब्रह्मचर्यमधः स्वप्न स्नान त्रिषवणं चरेत् ॥४८॥
वर्जयेदसदालाप भोगानुच्चावचांस्तथा ।
अहिंस्रः सर्वभूतानां वासुदेवपरायणः ४९॥
त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभो ।
कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥५०॥
पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ।
चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥५१॥
शृतेन तेन पुरुषं यजेत सुसमाहितः ।
नैवेद्य चातिगुणवद्दद्यात्पुरुषतुष्टिदम् ॥५२॥

पद्मं शङ्खश्च श्रीवत्सो गदा गरुड एव च।
चक्रं खड्गश्च शार्ङ्गं च अष्टौ मुद्रा प्रकीर्तिताः ॥ ५५ ॥

विसर्जनमन्त्रः—

गच्छ गच्छ परं स्थानं पुराण पुरुषोत्तम।
यत्र ब्रह्मादयो देवा विदन्ति परमं पदम् ॥
अर्चनं ये न जानन्ति हरेर्मन्त्रैर्यथोदितम्।
ते तत्र मूलमन्त्रेण पूजयन्त्वच्युतं सदा ॥
ॐ नमो नारायणाय इति, अष्टाक्षरं मूलमंत्रम्।

इति एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## अष्टाक्षर मंत्र महिमा।

# नरसिंह पुराणे ६२ अध्याये

### विष्णु पूजा विधि वर्णनम्

मार्कण्डेय उवाच—

वर्णानामाश्रमाणां च कथितं लक्षणं तव।
भूयः कथय राजेन्द्र शुश्रूषा तव का नृप ॥

सहस्रानीक उवाच—

स्नात्वा वेश्मनि देवेशमर्चयेदच्युतं क्षिति।
त्वयोक्तं मम विप्रेन्द्र तत्कथं पूजनं भवेत् ॥
यैर्मन्त्रैरर्च्यते विष्णुः येषु स्थानेषु वै मुने।
तानि स्थानानि तन्मन्त्रं त्वमाचक्ष्व महामुने ॥

श्रीमार्कण्डेय उवाच—

अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः।
यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥
अग्नौ क्रियावतां देवो हृदि देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ॥
यश्चाग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
एतेषु च हरेः सम्यगर्चनं मुनिभिः स्मृतम्।
तस्य सर्वमयत्वाच्च स्थण्डिले भावितात्मनः ॥
आनुष्टुभस्य सूक्तस्य विष्णुस्तस्य च देवताः।
पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ॥

तिलैः स्नानं तिलैर्होमं नैवेद्यं तिलमोदकं ।
दीपैश्च तिलतैलेन तथा देयं तिलोदकम् ॥
तिलाश्च देया विप्रेषु तस्मिन्नहनि पार्थिव ।
उपवासदिने राजन् होतव्याश्च तथा तिलाः ॥
उपोषितेनापरेऽह्नि होतव्याश्च विशेषतः ।
इन्धनं च प्रदातव्यं ब्राह्मणेषु तथाऽनघ ॥
तिलप्रस्थं तथा हुत्वा सोपवासो जितेन्द्रियः ।
न दुर्गतिमवाप्नोति नात्र कार्या विचारणा ॥
तद्विष्णो परमन्नित्ये सोमं मन्त्रं प्रकीर्त्तितं ।
पौरुषं च तथा सूक्तं श्रीसूक्तेन च संयुतम् ।
होमः कार्योऽथ राजेन्द्र सावित्र्या परमात्मनः ॥
एतत्प्रोक्तं द्विजातीनां स्त्रीशूद्रेषु च यत् शृणु ।
द्वादशाष्टाक्षरौ मन्त्रौ तेषां प्रोक्तौ महात्मनाम् ॥
हितौ तौ च द्विजातीनां मन्त्रश्रेष्ठौ नराधिप ।
तेभ्योऽप्यधिकं मन्त्रोऽपि विद्यते नहि कुत्रचित् ॥

वज्र उवाच—

द्वादशाष्टाक्षरौ मन्त्रौ कथयस्व ममानघ ।
पुण्यौ पवित्रौ माङ्गल्यौ सर्व पापप्रणाशनौ ॥

मार्कण्डेय उवाच—

**ॐ नमो भगवते वासुदेवाय । ॐ नमो नारायणाय**

एतौ मया च कथितौ पवित्रौ मन्त्राविमौ पापहरौ वरेण्याम् ।
परायणौ सर्व तपस्विना वरौ वरस्यभूतौ भुवनेषु नित्यम् ॥
यथा तिथिस्ते श्रवणेन युक्ता माघस्य मासस्य तथा मयोक्ता ।
कार्या तथैव नृपतेविशेषाद् योगे पवित्रे सरिताह्वयस्य ॥
इति विष्णुधर्मोक्त तिलद्वादशी व्रतम् ।

---

## अष्टाक्षर मंत्र महिमा

## ब्रह्मपुराणे अ० ६१ विष्णु पूजन विधौ ॥

ब्रह्मोवाच—

देवान्पितॄंस्तथा चान्यान्सतर्प्याऽऽचम्य वाग्यतः ।
हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनम् ॥ १ ॥

# नृसिंह पुराणे ६३ अध्याये च

सहस्रानीक उवाच—

सत्यमुक्तं त्वया ब्रह्मन् वैदिकः परमो विधिः ।
विष्णोर्देवादिदेवस्य पूजन प्रति मेऽधुना ॥
अनेन विधिना ब्रह्मन् पूज्यते मधुसूदनः ।
वेदज्ञैरेव नान्यैस्तु तस्मात्सर्वहितं वद ॥

श्रीमार्कण्डेय उवाच—

अष्टाक्षरेण देवेश नरसिंहमनामयम् ।
गन्धपुष्पादिभिर्नित्यमर्चयेदन्युत नरः ॥
राजन्नष्टाक्षरो मन्त्रः सर्वपापहरः परः ।
समस्तयज्ञफलदः सर्वशान्तिकरः शुभः ॥

## ॐ नमो नारायणाय

गन्धपुष्पादि सकलमनेनैव निवेदयेत् ।
अनेनाभ्यर्चितो देवः प्रीतो भवति तत्क्षणात् ॥
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः ।
ॐ नमो नारायणायेति मन्त्रः सर्वार्थ साधकः ॥
इम मन्त्र जपेद्यस्तु शुचिर्भूत्वा समाहितः ।
सर्व पापविनिर्मुक्तो विष्णु सायुज्यमाप्नुयात् ॥
सर्वतीर्थफलं ह्येतत्सर्वतीर्थवर नृप ।
हरेरर्चनमव्यग्र सर्वयज्ञफलं नृप ॥
तस्मात्कुरु नृपश्रेष्ठ प्रतिमादिषु चार्चनम् ।
दानानि विप्रमुख्येभ्यः प्रयच्छ विधिना नृप ॥
एव कृते नृपश्रेष्ठ नरसिंहप्रसादतः ।
प्राप्नोति वैष्णवं तेजो यत्काङ्क्षन्ति मुमुक्षवः ॥

# नृसिंह पुराणे १८ अध्याये

श्रीशुक उवाच—

किंजपन मुच्यते तात सतत विष्णु तत्परः ।
संसार दुःखात्सर्वेषां हिताय वद मे पितः ॥

उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले।
अवान्तरदिशो यास्तु तासु सर्वासु माधवः ॥१५॥
गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा।
नरसिंह कृता गुप्तिर्वासुदेवमयो ह्यहम् ॥१६॥
एवं विष्णुमयो भूत्वा ततः कर्म समारभेत्।
यथा देहे तथा देवे सर्वतत्त्वानि योजयेत् ॥१७॥
ततश्चैव प्रकुर्वीत प्रोक्षणं प्रणवेन तु।
फट्कारान्तं समुद्दिष्टं सर्वविघ्नहरं शुभम् ॥१८॥
तत्रार्कचन्द्रवह्नीनां मण्डलानि विचिन्तयेत्।
पद्ममध्ये न्यसेद्विष्णुं पवनस्याम्बरस्य च ॥१९॥
ततो विचिन्त्य हृदय ओंकारं ज्योतिरूपिणम्।
कर्णिकायां समासीनं ज्योतीरूपं सनातनम् ॥२०॥
अष्टाक्षरं ततो मन्त्रं विन्यसेच्च यथाक्रमम्।
तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम् ॥२१॥
द्वादशाक्षर मन्त्रेण यजेद्देव सनातनम्।
ततोऽवधार्य हृदये कर्णिकायां वह्निर्न्यसेत् ॥२२॥
चतुर्भुजं महासत्त्वं सूर्य कोटि समप्रभम्।
चिन्तयित्वा महायोगं ज्योतीरूपं सनातनम् ॥२३॥
ततश्चाऽवाहयेन्मन्त्रं क्रमेणाऽचिन्त्य मानसे॥

आवाहन मन्त्रः—

मीनरूपो वराहश्च नरसिंहोऽथ वामनः। आयातु देवो वरदो मम नारायणोऽग्रतः। ॐ नमो नारायणाय नमः ॥२४॥

स्थापन मन्त्रः—

कर्णिकायां सुपीठेऽत्र पद्मकल्पितमासनम्। सर्वसत्त्वहितार्थाय तिष्ठ त्वं मधुसूदन। ओं नमो नारायणाय नमः ॥२५॥

अर्घमन्त्रः—

ॐ त्रैलोक्यपतीनां पतये देवदेवाय हृषीकेशाय विष्णवे नम.। ओं नमो नारायणाय नमः ॥२५॥

पाद्यमन्त्रः—

ओं पाद्य पादयोर्देव पद्मनाभ सनातन। विष्णो कमलपत्राक्ष गृहाण मधुसूदन। ओं नमो नारायणाय नमः ॥२७॥

महापातकयुक्तोऽपि मुच्यते नात्र संशयः।
हृदि कृत्वा हरिं देवं मन्त्रमेन तु यो जपेत् ॥
सर्वपापविशुद्धात्मा स गच्छेत् परमां गतिम्।
प्रथमेन तु लक्षेण आत्मशुद्धिर्भविष्यति ॥
द्वितीयेन तु लक्षेण मनः शुद्धिमवाप्नुयात।
तृतीयेन तु लक्षेण स्वर्गलोकमवाप्नुयात् ॥
चतुर्थेन तु लक्षेण हरेः सामीप्यमाप्नुयात्।
पञ्चमेन तु लक्षेण निर्मल ज्ञानमाप्नुयात ॥
तथा षष्ठेन लक्षेण भवेद्विष्णो स्थिरा गतिः।
सप्तमेन तु लक्षेण स्वरूप प्रतिपद्यते ॥
अष्टमेन तु लक्षेण निर्वाणमधिगच्छति।
स्व स्व धर्मे समायुक्तो जप कुर्याद् द्विजोत्तमः ॥
एतत्सिद्धिकर मन्त्रमष्टाक्षरमतन्द्रितः।
दुःस्वप्नातुरपैशाचा उरगा ब्रह्मराक्षसाः ॥
जापितं नोपसर्पन्ति चौराः क्षुद्राधयस्तथा।
एकाग्रमनसाऽन्यग्रो विष्णुभक्तो दृढव्रतः ॥
जपेन्नारायण मन्त्रमेष मृत्युभयाऽपहम्।
मन्त्राणां परमो मन्त्रो देवताना च दैवतम् ॥
गुह्यानां परमं गुह्यमोंकाराद्यक्षराष्टकम्।
आयुष्यं धनपुत्रांश्च पशुविद्यां महद्यशः ॥
धर्मार्थकाममोक्षांश्च लभते च जपन्नरः।
एतत्सत्य च धर्म्यं च वेदश्रुति निदर्शनात् ॥
एतत्सिद्धि करं नृणां मन्त्ररूप न संशयः।
ऋषयः पितरो देवाः सिद्धास्त्वसुरराक्षसा ॥
एतदेव परं जप्त्वा परां सिद्धिमितो गता।
ज्ञात्वा यस्त्वात्मन काल शास्त्रांतरविधानतः ॥
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम्।
नारायणाय नम इत्ययमेव सत्य।
संसार घोर विष संहरणाय मन्त्रः।
शृण्वन्तु भव्यमतयो मुदितास्त्वरागा।
उच्चैस्तरा मुपदिशाम्यहमूर्ध्वबाहुः।
भूत्वोर्ध्वबाहुरद्याह सत्यपूर्वं ब्रवीम्यहम् ॥

पूर्वे दले वासुदेवं याम्ये संकर्षणं न्यसेत्।
प्रद्युम्नं पश्चिमे कुर्यादनिरुद्धं तथोत्तरे॥ ३९॥
वाराहं च तथाऽऽग्नेये नरसिंहं च नैर्ऋते।
वायव्ये माधवं चैव तथैशाने त्रिविक्रमम्॥ ४०॥
तथाऽष्टाक्षरदेवस्य गरुडं पुरतो न्यसेत्।
वामपार्श्वे तथा चक्रं शङ्खं दक्षिणतो न्यसेत्॥ ४१॥
तथा महागदां चैव न्यसेद्देवस्य दक्षिणे।
ततः शार्ङ्गं धनुर्विद्वान्न्यसेद्देवस्य वामतः॥ ४२॥
दक्षिणेनेषुधी दिव्ये खड्गं वामे च विन्यसेत्।
श्रियं दक्षिणतः स्थाप्य पुष्टिमुत्तरतो न्यसेत्॥ ४३॥
वनमालां च पुरतस्ततः श्रीवत्सकौस्तुभौ।
विन्यसेद्धृदयादीनि पूर्वादिषु चतुर्दिशम्॥ ४४॥
ततोऽस्त्रं देवदेवस्य कोणे चैव तु विन्यसेत्।
इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा॥ ४५॥
वायुं धनदमीशानमनन्तं ब्रह्मणा सह।
पूजयेत्तान्निकैर्मन्त्रैरधश्चोर्ध्वं तथैव च॥ ४६॥
एवं सपूज्य देवेशं मण्डलस्थं जनार्दनम्।
लभेदभिमतान्कामान्नरो नास्त्यत्र संशयः॥ ४७॥
अनेनैव विधानेन मण्डलस्थं जनार्दनम्।
पूजितं यः सपश्येत स विशेद्विष्णुमव्ययम्॥ ४८॥
सकृदप्यर्चितो येन विधिनाऽनेन केशवः।
जन्ममृत्युजरां तीर्त्वा स विष्णोः पदमाप्नुयात्॥ ४९॥
यः स्मरेत्सततं भक्त्या नारायणमतन्द्रितः।
अन्वहं तस्य वासाय श्वेतद्वीपः प्रकल्पितः॥ ५०॥
ओंकारादिसमायुक्तं नमः कारान्तदीपितम्।
तन्नाम सर्वसत्वानां मन्त्र इत्यभिधीयते॥ ५१॥
अनेनैव विधानेन गन्धपुष्पं निवेदयेत्।
एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु॥ ५२॥
मुद्रास्ततो नियन्त्रीयाद्यथोक्तक्रमचोदिताः।
जपं चैव प्रकुर्वीत मूलमन्त्रेण मन्त्रवित्॥ ५३॥
अष्टाविंशतिमष्टौ वा शतमष्टोत्तरं तथा।
कामेषु च यथाप्रोक्तं यथाशक्ति समाहितः॥ ५४॥

सर्वेषामपि पुण्यानां सर्वेषां श्रेयसामपि ।
सर्वेषामपि यज्ञानां जपयज्ञः परः स्मृतः ॥
तत्रादौ जपयज्ञस्य फलं स्वस्त्ययनं महत् ।
शैवं षडक्षरं दिव्यं मन्त्रमाहुर्महर्षयः ॥
देवानां परमो देवो यथा वै त्रिपुरान्तकः ।
मन्त्राणां परमो मन्त्रस्तथा शैवः षडक्षरः ॥
एष पञ्चाक्षरो मन्त्रो जन्तूणां मुक्तिदायकः ।
संसेव्यते मुनिश्रेष्ठैरशेषैः सिद्धि कांक्षिभिः ॥
अस्यैवाक्षरमाहात्म्यं नालं वक्तुं चतुर्मुखः ।
श्रुतयो यत्र सिद्धान्तं गताः परमनिर्वृताः ॥
सर्वज्ञः परिपूर्णश्च सच्चिदानन्दलक्षणः ।
स शिवो यत्र रमते शैवे पञ्चाक्षरे शुभे ॥
एतेन मन्त्रराजेन सर्वोपनिषदात्मना ।
लेभिरे मुनयः सर्वे परं ब्रह्म निरामयम् ॥
नमस्कारेण जीवत्वं शिवेऽत्र परमात्मनि ।
ऐक्यं गतमतो मन्त्रः परब्रह्ममयो ह्यसौ ॥
भवपाशनिबद्धानां देहिनां हितकाम्यया ।
आहोंनमः शिवायेति मन्त्रमाद्यं शिवः स्वयम् ॥
किं तस्य बहुभिर्मन्त्रैः किं तीर्थैः किं तपोऽध्वरैः ।
यस्योंनमः शिवायेति मन्त्रो हृदयगोचरः ॥
तावद्भ्रमन्ति संसारे दारुणे दुःखसङ्कुले ।
यावन्नोच्चारयन्तीमं मन्त्रं देहभृतः सकृत् ॥
मन्त्राऽधिराजराजोऽयं सर्ववेदान्तशेखरः ।
सर्वज्ञाननिधानं च सोऽयं चैव षडक्षरः ॥
कैवल्यमार्गदीपोऽयमविद्यासिन्धुवाडवः ।
महापातकदावाग्निः सोऽयं मन्त्रः षडक्षरः ॥
तस्मात्सर्वप्रदो मन्त्रः सोऽयं पञ्चाक्षरःस्मृतः ।
स्त्रीभिः शूद्रैश्च संकीर्णैर्धार्यते मुक्तिकांक्षिभिः ॥
नास्य दीक्षा न होमश्च न संस्कारो न तर्पणम् ।
न कालो नोपदेशश्च सदा शुचिरयं मनुः ॥
महापातकविच्छित्यै शिव इत्यक्षर द्वयम् ।
अलं नमस्क्रिया युक्तो मुक्तये परिकल्प्यते ॥

दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव च।
अर्चितं स्याज्जगत्सर्वं तेन वै स चराचरम् ॥
आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्।
द्वितीययासनं दद्यात्पाद्यं दद्यात्तृतीयया ॥
चतुर्थ्यार्घः प्रदातव्यः पञ्चम्याचमनीयकम्।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च।
दशम्या पुष्पदानं स्यात् एकादश्या च धूपकम् ॥
द्वादश्या च तथा दीपं त्रयोदश्यार्चनं तथा।
चतुर्दश्या स्तुतिं कृत्वा पञ्चदश्या प्रदक्षिणम् ॥
षोडश्योद्वासनं कुर्यात् शेषकर्माणि पूर्ववत्।
स्नानं वस्त्रं च नैवेद्यं दद्यादाचमनीयकम् ॥
षण्मासात्सिद्धिमाप्नोति देवदेवं समर्चयन्।
संवत्सरेण तेनैव सायुज्यमधिगच्छति ॥
हविषाग्नौ जले पुष्पैः ध्यानेन हृदये हरिः।
अर्चन्ति सूरयो नित्यं जपेन रविमण्डले ॥
आदित्यमण्डले दिव्यं देवदेवमनामयम्।
शङ्खचक्रगदापाणिं ध्यात्वा विष्णुमुपासते ॥

ध्येयः सदासवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥
एतत्पठन् केवलमेव सूक्तं
दिने दिने भावित विष्णुबुद्धिः।
स सर्वपापं प्रविहाय वैष्णवं
पदं प्रयात्यच्युततुष्टिहेतुः ॥
पत्रेषु पुष्पेषु फलेषु तोये-
ष्वक्रीतलभ्येषु सदैव सत्सु।
भक्त्यैकलभ्ये पुरुषे पुराणे
मुक्त्यै किमर्थं क्रियते न यत्नः ॥

इत्येवमुक्तः पुरुषस्य विष्णोरर्चाविधिस्तेव मया नृपेन्द्र।
अनेन नित्यं कुरु विष्णुपूजां प्राप्तं तदिष्टं यदि वैष्णवं पदम् ॥
इति श्री नरसिंहपुराणे विष्णोरर्चाविधिर्नाम द्विषष्टितमोऽध्यायः ॥

क्वचित्प्रियेण भुक्तं यद्रोचते तु मनीषिणाम् ।
दम्पत्योः प्रीतयागेन संगमः प्रीति .वर्द्धनः ॥
प्रियं यदा मे जायेत तदा सङ्गस्तु ते मयि ।
का प्रीतिः किं सुखं पुंसां बलाद्भोगेन योषिताम् ॥
अप्रीतां रोगिणीं नारीमन्तर्वर्त्नीं धृतव्रताम् ।
रजस्वलामकामां च न कामेत बलात्पुमान् ॥
प्रीणनं पालनं पोषं रञ्जनं मार्दवं दयाम् ।
कृत्वा वधूमुपगमेद्युवतिं प्रेमवान्पतिः ॥
युवतो कुसुमे चैवं विधेयं सुखमिच्छता ॥
इत्युक्त्वाऽपितया साध्व्या स राजा स्मर विह्वलः ।
बलादाकृष्य तां हस्ते परिरेभे रिरंसया ।
तां स्पृष्टमात्रां सहसा तप्तायः पिण्ड सन्निभाम् ।
निर्दहन्तीमिवात्मान तत्याज भय विह्वलः ॥

राजोवाच—

अहोसुमहदाश्चर्यमिदं दृष्टं तव प्रिये ।
कथमग्निसम जात वपुः पल्लवकोमलम् ॥
इत्थं सुविस्मितो राजा भीतः सा राजवल्लभा ।
प्रत्युवाच विहस्यैनं विनयेन शुचिस्मिता ॥

राज्ञ्युवाच—

राजन्मम पुरा बाल्ये दुर्वासा मुनिपुङ्गवः ॥
शैवीं पञ्चाक्षरीं विद्यां कारुण्येनोपदिष्टवान् ॥
तेन मन्त्राऽनुभावेन ममाङ्गं कलुषोज्झितम् ।
स्प्रष्टुं न शक्यते पुम्भिः सपापैर्देववर्जितैः ॥
त्वया राजन् प्रकृतिना कुलटा गणिकादयः ।
मदिरास्वादनिरता निषेव्यन्ते सदा स्त्रियः ॥
न स्नानं क्रियते नित्यं न मन्त्रो जप्यते शुचिः ।
नाराध्यते त्वयेशानः कथं मां स्प्रष्टुमर्हसि ॥

राजोवाच—

तां समाख्याहि सुश्रोणि शैवीं पञ्चाक्षरीं शुभाम् ।
विद्यां विध्वस्तपापोऽहं त्वयेच्छामि रतिं प्रिये ॥

राज्ञ्युवाच—

नाहं तवोपदेशं वै कुर्यां मम गुरुर्भवान् ।
उपातिष्ठ गुरुं राजन् गर्गं मन्त्रविदां वरम् ॥

सि उवाच—

अष्टाक्षरं प्रवक्ष्यामि मन्त्राणां मन्त्रमुत्तमम्।
यं जपन् मुच्यते मर्त्यो जन्मसंसारबन्धनात् ॥
हृत् पुण्डरीकमध्यस्थं शङ्खचक्रगदाधरम्।
एकाग्रमनसा ध्यात्वा विष्णुं कुर्याज्जपं द्विजः
एकान्ते निर्जनस्थाने विष्णवग्रे वा जलान्तिके।
जपेदष्टाक्षर मन्त्र चित्ते विष्णुं निधाय वै ॥
अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायण: स्वयम्।
छन्दश्च देवी गायत्री परमात्मा च देवता ॥

शुक्लवर्णञ्च ॐकारं नकार रक्तमुच्यते।
मोकार वर्णत. कृष्णं नाकार रक्तमुच्यते ॥
राकार कुङ्कुमाभ तु यकार पीतमुच्यते।
णाकारमञ्जनाभ तु यकार बहुवर्णकम् ॥
ॐ नमो नारायणायेति मन्त्रः सर्वार्थ साधकः।
भक्तानां जपतां तात स्वर्गमोक्षफलप्रदः ॥
वेदानां प्रणयेनैव सिद्धो मन्त्रः सनातनः।
सर्वपाप हरः श्रीमान् सर्वमन्त्रेषु चोत्तम ॥

एनमष्टाक्षर मन्त्र जपन्नारायण स्मरेत्।
सन्ध्यावसाने सतत सर्वपापै. प्रमुच्यते ॥
एष एव परो मन्त्र एष एव परं तप.।
एष एव परो मोक्ष एष स्वर्ग उदाहृत. ॥

सर्ववेदरहस्येभ्य. सार एष समुद्धृतः।
विष्णुना वैष्णवानां हि हिताय मनुजां पुरा ॥
एवं ज्ञात्वा ततो विप्रः अष्टाक्षरमिमं स्मरेत्।
स्नात्वा शुचि. शुचौ देशे जपेत्पापविशुद्धये ॥

जपे दाने च होमे च गमने ध्यानपर्वसु।
जपेन्नारायणं मन्त्र कर्मपूर्वे परे तथा ॥
मासि मासि तु द्वादश्यां विष्णुभक्तो द्विजोत्तमः।
स्नात्वा शुचिर्जपेद्यस्तु नमो नारायणं शतम् ॥
स गच्छेत्परमं देवं नारायणमनामयम्।
गन्धपुष्पादिभिर्विष्णुमनेनाराध्य यो जपेत् ॥

शैवी पंचाक्षरी विद्या यदा ते हृदयं गता।
अघानां कोटयस्त्वत्तः काकरूपेण निर्गताः॥
आसंस्तवाद्य राजेन्द्र दग्धाः पातक कोटयः।
अनया सह पूतात्मा विहरस्व यथासुखम्॥
इत्याभाष्य मुनिश्रेष्ठस्तं मन्त्रमुपदिश्य च।
ताभ्यां विस्मितचित्ताभ्यां स्तुहितः स्वगृहं ययौ॥
गुरुवर्य्यमनुज्ञाप्य मुदितौ तौ च दम्पती।
ततः स्वभवन प्राप्य रेजतुः स्म महाद्युती॥
राजा दृढं समाश्लिष्य पत्नीं चन्दनशीतलाम्।
संतोष परम लेभे निःस्वः प्राप्य यथा धनम्॥
अशेषवेदोपनिषत्पुराणशास्त्रावतंसोऽयमघान्तकारी।
पञ्चाक्षरस्यैव महाप्रभावो मया समासात्कथितो वरिष्ठः॥
इति श्रीस्कन्द पुराणे ब्रह्मखण्डान्तर्गत ब्रह्मोत्तर खण्डे प्रथमाध्यायः॥

---

## पञ्चाक्षर माहात्म्यम्

### शिवपुराणे ( वा० सं० उत्तरभागे १२ अध्याये )

श्रीकृष्ण उवाच—

महर्षिवर सर्वज्ञ सर्वज्ञानमहोदधे।
पञ्चाक्षरस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः॥

उपमन्युरुवाच—

पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि।
अशक्यं विस्तराद्वक्तुं तस्मात् संक्षेपतः शृणु॥
वेदे शिवागमे चायमुभयत्र षडक्षरः।
मन्त्रः स्थितः सदा मुख्यो लोके पञ्चाक्षरः स्मृतः॥
सर्वमन्त्राधिकश्चायमोङ्काराद्यः षडक्षरः।
सर्वेषां शिवभक्तानामशेषार्थप्रसाधकः॥
तदल्पाक्षरमर्थाढ्यं वेदसारं विमुक्तिदम्।
आज्ञासिद्धमसन्दिग्धं वाक्यमेतच्छिवात्मकम्॥
नानासिद्धियुतं दिव्यं लोकचित्तानुरञ्जकम्।
सुनिश्चितार्थगम्भीरं वाक्यं तत् पारमेश्वरम्॥

हे पुत्र शिष्याः शृणुत न मन्त्रोऽष्टाक्षरात्परः ।
सत्य सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ॥
वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः ।
आलोच्य सर्वशास्त्राणि विचार्य च पुनः पुनः ॥
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
इत्येतत् सकलं प्रोक्त शिष्याणां तव पुण्यदम् ॥
कथाश्च विविधाः प्रोक्ता मया भज जनार्दनम् ।
अष्टाक्षरमिमं मन्त्रं सर्वदुःख विनाशनम् ॥
जप पुत्र महाबुद्धे यदि सिद्धिमभीप्ससि ।
इमं स्तवं व्यासमुखोद्विनिःसृतं संध्यात्रये ये पुरुषाः पठन्ति ।
तेधौतपाण्डुरपटा इव राजहंसाःसंसारसागरमपेतभयास्तरन्ति ॥

---

## अथ पञ्चाक्षर मंत्र माहात्म्यम् ।

### तद्यथा स्कन्द पुराणे ब्रह्मखण्डान्तर्गत ब्रह्मोत्तर खण्डे १ अध्याये

ॐ नमः शिवाय ।

ज्योतिर्मात्र स्वरूपाय निर्मलज्ञानचक्षुषे ।
नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ॥

ऋषय ऊचुः—

आख्यातं भवता सूत विष्णोर्माहात्म्यमुत्तमम् ।
समस्ताघहरं पुण्यं समासेन श्रुतं च नः ॥
इदानीं श्रोतुमिच्छामो माहात्म्यं त्रिपुरद्विषः ।
तद्भक्तानां च माहात्म्यमशेषाघहरं परम् ॥
तन्मन्त्राणां च माहात्म्यं तथैव द्विजसत्तम ।
तत्कथायाश्च तद्भक्तैः प्रभावमनुवर्णय ॥

सूत उवाच—

एतावदेव मर्त्यानां परं श्रेयः सनातनम् ।
यदीश्वरकथायां वै जाता भक्तिरहैतुकी ॥
अतस्तद्भक्तिलेशस्य माहात्म्यं वर्ण्यते मया ।
अपि वर्षायुतेनालं वक्तुं विस्तरतः क्वचित् ॥

एतावत् तु शिवज्ञानमेतावत् परमं पदम् ।
यदोंनमःशिवायेति शिववाक्यं षडक्षरम् ॥
विधिवाक्यमिदं शैवं नार्थवादं शिवात्मकम् ।
यः सर्वज्ञः स सम्पूर्णः स्वभावविमलः शिवः ॥
लोकानुग्रहकर्त्ता च स मृषार्थं कथं वदेत् ।
यद् यथावस्थितं वस्तु गुणदोषैः स्वभावतः ।
यावत् फलञ्च यत् पुण्यं सर्वज्ञस्तु तथा वदेत् ॥
रागाज्ञानादिभिर्दोषैर्ग्रस्तत्वादनृतं वदेत् ।
ते चेश्वरे न विद्यन्ते ब्रूयात् स कथमन्यथा ॥
अजातदोषदोषेण सर्वज्ञेन शिवेन यत् ।
प्रणीतममलं वाक्यं तत् प्रमाणं न संशयः ॥
तस्मादीश्वरवाक्यानि श्रद्धेयानि विपश्चिता ।
यथार्थं पुण्यपापेषु तदश्रद्धो व्रजत्यधः ॥
स्वर्गापवर्गसिद्ध्यर्थं भाषितं यत् सुशोभनम् ।
वाक्यं मुनिवरैः शान्तैस्तद्विज्ञेयं सुभाषितम् ॥
राग-द्वेषानृत-क्रोध-काम-तृष्णानुसारि यत् ।
वाक्यं निरयहेतुत्वात् तद्दुर्भाषितमुच्यते ॥
सत्कृतेनापि किं तेन मृदुना ललितेन वा ।
अविद्यारागवाक्येण संसारक्लेशहेतुना ॥
यच्छ्रुत्वा जायते श्रेयो रागादीनाञ्च संक्षयः ।
विरूपमपि तद्वाक्यं विज्ञेयमतिशोभनम् ॥
बहुत्वेऽपि हि मन्त्राणां सर्वज्ञेन शिवेन यत् ।
प्रणीतममलं मन्त्रं न तेन सदृशं क्वचित् ॥
शिवज्ञानानि यावन्ति विद्यास्थानानि यानि च ।
षडक्षरस्य सूत्रस्य तानि भाष्यं समासतः ॥
किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ।
यस्योंनमःशिवायेति मन्त्रोऽयं हृदि संस्थितः ॥
तेनाधीतं श्रुतं तेन कृतं सर्वमनुष्ठितम् ।
येनोंनमःशिवायेति मन्त्राभ्यासः स्थिरीकृतः ॥
नमस्कारादिसंयुक्तं शिवायेत्यक्षरत्रयम् ।
जिह्वाग्रे वर्त्तते यस्य सफलं तस्य जीवितम् ॥

उपदिष्टः सद्गुरुणा अतः क्षेत्रे च पावने।
सद्यो यथेप्सितां सिद्धिं ददातीति किमद्भुतम् ॥
अतः सद्गुरुमाश्रित्य ग्राह्योऽयं मन्त्रनायकः।
पुण्यक्षेत्रेषु जप्तऽयं सद्यः सिद्धिं प्रयच्छति ॥
गुरवो निर्मलाः शान्ताः साधवो मितभाषिणः।
कामक्रोधविनिर्मुक्ताः सदाचारा जितेन्द्रियाः ॥
एतैः कारुण्यतो दत्तो मन्त्रः क्षिप्रं प्रसिद्ध्यति।
क्षेत्राणि जपयोग्यानि समासात्कथयाम्यहम् ॥
प्रयागं पुष्करं रम्यं केदारं सेतुबन्धनम्।
गोकर्णं नैमिषारण्यं सद्यः सिद्धिकरं नृणाम् ॥

## कलावती कथा।

अत्रानुवर्ण्यते सद्भिरितिहासः पुरातनः।
असकृद्वा सकृद्वापि शृण्वतां मङ्गलप्रदः ॥
मथुरायां यदुश्रेष्ठो दाशार्ह इति विश्रुतः।
बभूव राजा मतिमान् महोत्साहो महाबलः ॥
शास्त्रज्ञो नयवाक् शूरो धैर्यवानमितद्युतिः।
अप्रधृष्यः सुगम्भीरः सङ्ग्रामेष्वनिवर्तितः ॥
महारथो महेष्वासो नानाशास्त्रार्थकोविदः।
वदान्यो रूपसम्पन्नो युवा लक्षणसंयुतः ॥
स काशिराजतनयामुपयेमे वराननाम्।
कान्तां कलावतीं नाम रूपशीलगुणान्विताम् ॥
कृतोद्वाहः स राजेन्द्रः संप्राप्य निजमन्दिरम्।
रात्रौ तां शयनारूढां सङ्गमाय समाह्वयत् ॥
सा सभर्त्रा समाहूता बहुशः प्रार्थिता सती।
न बबन्ध मनस्तस्मिन् नागच्छत्तदन्तिकम् ॥
संगमाय यदाहूता नागता निजवल्लभा।
बलादाहर्तुकामस्तामुदतिष्ठन्महीपतिः ॥

राज्ञ्युवाच—

मा मां स्पृश महाराज कारणज्ञा व्रते स्थिताम्।
धर्माधर्मौ विजानासि मा कार्षीः साहसं मयि ॥

अम्भक्षा वायुभक्षाश्च ये चान्ये व्रतकर्शिताः।
तेषामेतैर्व्रतैर्नास्ति मम लोकसमागमः॥
भक्त्या पञ्चाक्षरेणैव यो हि मां सकृदर्चयेत्।
सोऽपि गच्छेन्मम स्थानं मन्त्रस्यास्यैव गौरवात्॥

तस्मात् तपांसि यज्ञाश्च व्रतानि नियमांस्तथा।
पञ्चाक्षरार्चनस्यैते कोट्यंशेनापि नो समाः॥
बद्धो वाऽप्यथवा मुक्तः पाशात् पञ्चाक्षरेण यः।
पूजयेन्मां स मुच्येत नात्र कार्या विचारणा॥

अरुद्रो वा सरुद्रो वा सकृत् पञ्चाक्षरेण यः।
पूजयेत् पतितो वापि मूढो वा मुच्यते नरः॥
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा।
स ब्रह्माङ्गेण मां भक्त्या पूजयेद् यदि मुच्यते॥

पतितोऽपतितो वापि मन्त्रेणानेन पूजयेत्।
मम भक्तो जितक्रोधो ह्यलब्धो लब्ध एव वा॥

अलब्धाल्लब्ध एवेह कोटिकोटिगुणाधिकः।
तस्माल्लब्ध्वैव मां देवि मन्त्रेणानेन पूजयेत्॥
लब्ध्वा सम्पूजयेद् यस्तु मैत्र्यादिगुणसंयुतः।
ब्रह्मचर्य्यरतो भक्त्या मत्सादृश्यमवाप्नुयात्॥

किमत्र बहुनोक्तेन भक्ताः सर्वेऽधिकारिणः।
मम पञ्चाक्षरे मन्त्रे तस्माच्छ्रेष्ठतरो हि सः॥

तस्मादनेन मन्त्रेण मनोवाक्कायभेदतः।
आवयोरर्चनं कुर्य्याज्जपहोमादिकं तथा॥

यथाप्रज्ञं यथाश्रद्धं यथाकालं यथामति।
यथाशक्ति यथासम्पद् यथायोगं यथारति॥
यदा कदापि वा भक्त्या यत्र कुत्रापि वा कृता।
येन केनापि वा देवि पूजा मुक्तिं नयिष्यति॥

मय्यासक्तेन मनसा यत् कृतं मम सुन्दरि।
मत्प्रियञ्च शिवञ्चैव क्रमेणाप्यक्रमेण वा॥
तथापि मम भक्ता ये नात्यन्तविवशाः पुनः।
तेषामर्थे तु शास्त्रेषु मयैव नियमः कृतः॥

सूत उवाच—

इति संभाषमाणौ तौ दम्पती गर्गसन्निधिम् ॥
प्राप्य तच्चरणौ मूर्ध्ना ववन्दाते कृताञ्जली ॥
अथ राजा गुरुं प्रीतमभिपूज्य पुनः पुनः ।
समाचष्ट विनीतात्मा रहस्यात्ममनोरथम् ॥

राजोवाच—

कृतार्थं मां कुरु गुरो संप्राप्त करुणार्द्रधीः ।
शैवीं पञ्चाक्षरीं विद्यामुपदेष्टुं त्वमर्हसि ॥
अनाज्ञातं यदाज्ञातं यत्कृतं राजकर्मणा ।
तत्पापं येन शुद्ध्येत तन्मन्त्र देहि मे गुरो ॥
एवमभ्यर्थितो राज्ञा गर्गो ब्राह्मणपुङ्गवः ।
तौ निनाय महापुण्य कालिन्द्यास्तटमुत्तमम् ॥
तत्र पुण्यतरोर्मूले निषण्णोऽथ गुरुः स्वयम् ।
पुण्यतीर्थजले स्नातं राजानं समुपोषितम् ॥
प्राङ्मुखं चोपवेश्याऽथ नत्वा शिवपदाम्बुजम् ।
तन्मस्तके करं न्यस्य ददौ मन्त्र शिवात्मकम् ॥
तन्मन्त्रधारणादेव तद्गुरोर्हस्तसङ्गमात् ।
निर्ययुस्तस्य वपुषो वायसाः शतकोटयः ॥
ते दग्धपक्षाः क्रोशन्तो निपतन्तो महीतले ।
भस्मीभूतास्ततः सर्वे दृश्यन्ते स्म सहस्रशः ॥
दृष्ट्वा तद्वायसकुलं दह्यमान सुविस्मितौ ।
राजा च राजमहिषी त गुरु पर्यपृच्छताम् ॥
भगवन्निदमाश्चर्यं कथ जात शरीरतः ।
वायसानां कुल दृष्ट किमेतत्साधु भण्यताम् ॥

श्रीगुरुरुवाच—

राजन्भवसहस्रेषु भवता परिधावता ।
संचितानि दुरन्तानि सन्ति पापान्यनेकशः ॥
तेषु जन्मसहस्रेषु यानि पुण्यानि सन्ति ते ।
तेषामाधिक्यतः क्वापि जायते पुण्ययोनिषु ॥
तथा पापीयसीं योनिं क्वचित्पापेन गच्छति ।
साम्ये पुण्यानयोश्चैव मानुषीं योनिमाप्तवान् ॥

शिवश्चास्तु शुभश्चास्तु शोभनोऽस्तु प्रियोऽस्त्विति।
एवं दद्याद्गुरुर्मन्त्रमाज्ञाश्चैव ततः परम् ॥

## जपविधिः

एवं लब्ध्वा गुरोर्मन्त्रमाज्ञाञ्चैव समाहितः।
संकल्प्य च जपेन्नित्यं पुरश्चरणपूर्वकम् ॥
यावज्जीवं जपेन्नित्यमष्टोत्तरसहस्रकम्।
अनन्यस्तत्परो भूत्वा स याति परमां गतिम् ॥
जपेदक्षरलक्षं वै चतुर्गुणितमादरात्।
नक्ताशी संयमी यः स पौरश्चरणिकः स्मृतः ॥
यः पुरश्चरणं कृत्वा नित्यजापी भवेत् पुनः।
तस्य नास्ति समो लोके स सिद्धः सिद्धिदो भवेत् ॥
स्नानं कृत्वा शुचौ देशे बद्ध्वा रुचिरमासनम्।
त्वया मां हृदि सञ्चिन्त्य सञ्चिन्त्य स्वगुरुं ततः ॥
उदङ्मुखः प्राङ्मुखो वा मौनी चैकाग्रमानसः।
विशोध्य पञ्चतत्त्वानि दहनप्लावनादिभिः ॥
मन्त्रन्यासादिकं कृत्वा सकलीकृतविग्रहः।
आवयोर्विग्रहं ध्यायन् प्राणापानौ नियम्य च ॥
विद्यास्थानं स्वकं रूपमृषिं छन्दोऽधिदैवतम्।
बीजं शक्तिं तथा वाच्यं स्मृत्वा पश्चाद्दशीं जपेत् ॥
उत्तमं मानसं जाप्यमुपांशु मध्यमं विदुः।
अधमं वाचिकं प्राहुरागमार्थविशारदाः ॥
यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥
जिह्वामात्रपरिस्पन्दादीषदुच्चारितोऽपि वा।
अपरैरश्रुतः किञ्चिच्छ्रुतो वोपांशुरुच्यते ॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम्।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः ॥
वाचिकस्त्वेक एव स्यादुपांशु शतमुच्यते।
साहस्रो मानसः प्रोक्तः सगर्भस्तु शताधिकः ॥
प्राणायामसमायुक्तः सगर्भो जप उच्यते।
आद्यन्तयोरगर्भोऽपि प्राणायामः प्रशस्यते ॥

मन्त्रं सुखमुखोच्चार्य्यमशेषार्थप्रसिद्धये।
प्राहोँ नमः शिवायेति सर्वज्ञः सर्वदेहिनाम्॥
तद्बीजं सर्वविद्यानां मन्त्रमाद्यं षडक्षरम्।
अतिसूक्ष्मं महार्थञ्च ज्ञेयं तद्वटबीजवत्॥
देवो गुणत्रयातीतः सर्वज्ञः सर्वकृत् प्रभुः।
ओमित्येकाक्षरे मन्त्रे स्थितः सर्वगतः शिवः॥
ईशानाद्यानि सूक्ष्माणि ब्रह्माण्येकाक्षराणि तु।
मन्त्रे नमः शिवायेति संस्थितानि यथाक्रमम्॥
मन्त्रे षडक्षरे सूक्ष्मे पञ्चब्रह्मतनुः शिवः।
वाच्यवाचकभावेन स्थितः साक्षात् स्वभावतः॥
वाच्यः शिवः प्रमेयत्वान्मंत्रस्तद्वाचकः स्मृतः।
वाच्यवाचकभावोऽयमनादिः संस्थितस्तयोः॥
यथानादिः प्रवृत्तोऽयं घोरसंसारसागरः।
शिवोऽपि हि तथानादिः संसारान्मोचकः स्थितः॥
व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः।
तद्वत् संसारदोषाणां प्रतिपक्षः शिवः स्मृतः॥
असत्यस्मिन् जगन्नाथे तमोभूतमिदं भवेत्।
आदित्येन यथा हीनं निरालोकमिदं जगत्॥
अभावादीश्वरस्येयं जगत्सृष्टिः कथं भवेत्।
अचेतनत्वात् प्रकृतेरज्ञत्वात् पुरुषस्य च॥
प्रधानपरमाण्वादि यावत् किञ्चिदचेतनम्।
न तत्कर्तृ स्वयं दृष्टं बुद्धिमत् कारणं विना॥
धर्माधर्मोपदेशश्च बन्धमोक्षविचारणा।
न सर्वज्ञं विना पुंसामादिसर्गे प्रसिध्यति॥
वैद्यं विना निरानन्दाः क्लिश्यन्ते रोगिणो यथा।
शिवं विना निरानन्दं क्लिश्यते हि जगत् तथा॥
तस्मादनादिः सर्वज्ञः परिपूर्णः सदा शिवः।
अस्ति नाथः परित्राता पुंसां संसारसागरात्॥
आदिमध्यान्तनिर्मुक्तः स्वभावविमलः प्रभुः।
सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे॥
तस्याभिधानं मन्त्रोऽयमभिधेयश्च स स्मृतः।
अभिधानाभिधेयत्वान्मन्त्रः सिद्धः परः शिवः॥

## जपनियमाः

उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः।
अपवित्रकरोऽशुद्धो विलपन्न जपेत् क्वचित् ॥
क्रोधं मदं क्षुतं त्रीणि निष्ठीवनविजृम्भणे।
दर्शनञ्च श्व-नीचानां वर्जयेज्जपकर्म्मणि ॥
आचामेत् सम्भवे तेषां स्मरेद्वा मां त्वया सह।
ज्योतींषि च प्रपश्येद्वा कुर्य्याद्वा प्राणसंयमम् ॥
अनासनः शयानो वा गच्छन्नुत्थित एव वा।
रथ्यायामशिवे स्थाने न जपेत् तिमिरान्तरे ॥
प्रसार्य्य न जपेत् पादौ कुक्कुटासन एव वा।
यान-शय्याधिरूढ़ो वा चिन्ताव्याकुलितोऽथवा ॥
शक्तश्चेत् सर्वमेवैतदशक्तः शक्तितो जपेत् ॥
किमत्र बहुनोक्तेन समासेन वचः शृणु।
सदाचारो जपन् शुद्धं ध्यायन् भद्रं समश्नुते ॥
आचारः परमो धर्म आचारः परमं धनम्।
आचारः परमा विद्या आचारः परमा गतिः ॥
आचारहीनः पुरुषो लोके भवति निन्दितः।
परत्र च सुखी न स्यात् तस्मादाचारवान् भवेत् ॥
यस्य यद्विहितं कर्म वेदे शास्त्रे च वैदिकैः।
तस्य तेन समाचारः सदाचारो न चेतरः ॥
सद्भिराचरितत्वाच्च सदाचारः स उच्यते।
सदाचारस्य तस्याहुरास्तिक्यं मूलकारणम् ॥
आस्तिकश्चेत् प्रमादाद्यैः सदाचारादपि च्युतः।
न दुष्यति नरो नित्यं तस्मादास्तिकतां व्रजेत् ॥
यथेहास्ति सुखं दुःखं सुकृतैर्दुष्कृतैरपि।
तथा परत्र चास्तीतिमतिरास्तिक्यमुच्यते ॥

## पञ्चाक्षरं परित्राणं पतितस्यान्त्यजस्य च।

रहस्यमन्यद्वक्ष्यामि गोपनीयमिदं प्रिये।
न वाच्यं यस्य कस्यापि नास्तिकस्याथवा पशोः ॥
सदाचारविहीनस्य पतितस्यान्त्यजस्य च।
पञ्चाक्षरात् परं नास्ति परित्राणं कलौ युगे ॥

अन्त्यजो वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा।
पञ्चाक्षरजपे निष्ठो मुच्यते पापपञ्जरात् ॥
इत्युक्त परमेशेन देव्या पृष्टेन शूलिना।
हिताय सर्वमर्त्यानां तिष्यजानां विशेषत ॥

# शिवपार्वती संवादः

देवी-उवाच—

कलौ कलुषिते काले दुर्जये दुरतिक्रमे।
अपुण्यतमसाच्छन्ने लोके धर्म्मपराङ्मुखे ॥
क्षीणे वर्णसमाचारे सङ्करे समुपस्थिते।
सर्वाधिकारे सन्दिग्धे निश्चिते वा विपर्य्यये ॥
तदोपदेशे विहते गुरुशिष्यक्रमे गते।
केनोपायेन मुच्यन्ते भक्तास्तव महेश्वर ॥

महेश्वर उवाच—

आश्रित्य परमां विद्यां हृद्यां पञ्चाक्षरीं मम।
भक्त्या च भावितात्मानो मुच्यन्ते कलिजा नरा ॥
मनोवाक्कायजैर्दोषैर्वक्तुं स्मर्त्तुमगोचरैः।
दूषितानां कृतघ्नानां निर्दयानां खलात्मनाम् ॥
लुब्धानां वक्रमनसामपि मत्प्रवणात्मनाम्।
मम पञ्चाक्षरीविद्या संसारभयतारिणी ॥
मयैवमसकृद्देवि प्रतिज्ञातं धरातले।
पतितोऽपि विमुच्येत मद्भक्तो विद्ययानया ॥

देवी उवाच—

कर्मायोग्यो भवेन्मर्त्यं पतितो यदि सर्वथा।
कर्मायोग्येन यत् कर्म कृतञ्च नरकाय हि।
तत कथं विमुच्येत पतिता विद्ययानया ॥

[श्वर] उवाच—

तथ्यमेतत् त्वया प्रोक्तं तथा हि शृणु सुन्दरि।
रहस्यमिति मत्वैतद्गोपितं यन्मया पुरा ॥
समन्त्रकं मां पतितः पूजयेद् यदि मोहितः।
नारकी स्यान्न सन्देहो मम पञ्चाक्षरं विना ॥

### अथ पञ्चाक्षर जपः

## शिवपुराणे विद्येश्वर संहितायां १५ अध्याये—

सूत उवाच

जप योगमथो वक्ष्ये गदतः शृणुत द्विजाः।
तपः कर्त्तुर्जपः प्रोक्तो यज्जपन् परिमार्जते॥
शिवनाम नमः पूर्वं चतुर्थ्यां पञ्चतत्त्वकम्।
स्थूल प्रणव रूपं हि शिवपञ्चाक्षरं द्विजाः॥
पञ्चाक्षर जपेनैव सर्वसिद्धिं लभेन्नरः।
प्रणवेनादि संयुक्तं सदा पञ्चाक्षरं जपेत्॥
गुरूपदेशं संगम्य सुखवासे सुभूतले।
पूर्वपक्षे समारभ्य कृष्णाभूतावधि द्विजाः॥
माघं भाद्रं विशिष्टं तु सर्वकालोत्तमोत्तमम्।
एकवारं मिताशी तु वाग्यतो नियतेन्द्रियः॥
स्वस्य राज्य पितॄणाञ्च शुश्रूषणञ्च नित्यशः।
सहस्रजपमात्रेण भवेच्छुद्धोऽन्यथा ऋणी॥
पञ्चाक्षरं पञ्चलक्षं जपेच्छिव मनुस्मरन्।
पद्मासनस्थं शिवदं गङ्गा चन्द्रकलान्वितम्॥
वामोरुस्थित शक्तया च विराजन्तं महागणै।
मृगटङ्कधरं देवं वरदाभय पाणिकम्॥
सदानुग्रहकर्त्तारं सदाशिवमनुस्मरन्।
सम्पूज्य मनसापूर्वं हृदये सूर्यमण्डले॥
जपेत्पञ्चाक्षरीं विद्यां प्राङ्मुखः ऊर्द्ध्वकर्म कृत।
प्रातः कृष्ण चतुर्दश्यां नित्यकर्म समाप्य च॥
मनोरमे शुचौ देशे नियतः शुद्धमानसः।
पञ्चाक्षरस्य मन्त्रस्य सहस्रं द्वादशं जपेत्॥

इत्याद्युक्त्वा—

एवं क्रमेण मुक्ताः स्युर्ब्राह्मणा ये जितेन्द्रियाः।
अन्येषां च क्रमं वक्ष्ये गदतः शृणुतादरात्॥
गुरूपदेशाज्जाप्यं वै ब्राह्मणानां नमोन्तकम्।
पञ्चाक्षरं पञ्चलक्ष आयुष्यं प्रजयेद्विधिः॥
क्षत्रियः पञ्च लक्षेण क्षात्रायमपनेष्यति।
पुनश्च पञ्चलक्षेण क्षत्रियो ब्राह्मणो भवेत्॥

# मंत्रग्रहणविधिः

तत्रादौ सम्प्रवक्ष्यामि मन्त्रसंग्रहणं शुभम्।
यद्विना निष्फलं जाप्यं येन वा सफलं भवेत्॥
आज्ञाहीनं क्रियाहीनं श्रद्धाहीनं वरानने।
आज्ञार्थं दक्षिणाहीनं सदा जप्तश्च निष्फलम्॥
आज्ञासिद्धं क्रियासिद्धं श्रद्धासिद्धं मदात्मकम्।
एवञ्चेद्दक्षिणायुक्तं मन्त्रसिद्धं महत्फलम्॥
उपगम्य गुरुं विप्रमाचार्यं तत्त्ववेदिनम्।
जापिनं सद्गुणोपेतं ध्यान-योगपरायणम्॥
तोषयेत् तं प्रयत्नेन भावशुद्धिसमन्वितः।
वाचा च मनसा चैव कायेन द्रविणेन च॥
आचार्यं पूजयेच्छिष्यः सर्वदा हि प्रयत्नतः।
हस्त्यश्व-रथ-रत्नानि क्षेत्राणि च गृहाणि च॥
भूषणानि च वासांसि धान्यानि च धनानि च।
एतानि गुरवे दद्याद्भक्त्या च विभवे सति॥
वित्तशाठ्यं न कुर्वीत यदीच्छेत् सिद्धिमात्मनः।
पश्चान्निवेदयेद्देवि स्वात्मानं सपरिच्छदम्॥
एवं सम्पूज्य विधिवद् यथाशक्ति त्ववञ्चयन्।
आददीत गुरोर्मन्त्रं ज्ञानञ्चैव क्रमेण तु॥
एवं तुष्टो गुरुः शिष्यं पूजकं वत्सरोषितम्।
शुश्रूषुमनहङ्कारं स्नातं शुचिमुपोषितम्॥
स्नापयित्वा विशुद्ध्यर्थं पूर्णकुम्भघृतेन वै।
जलेन मन्त्रशुद्धेन पुण्यद्रव्ययुतेन च॥
अलङ्कृत्य सुवेषञ्च गन्धस्रग्वस्त्रभूषणैः।
पुण्याहं वाचयित्वा च ब्राह्मणानभिपूज्य च॥
समुद्रतीरे नद्याञ्च गोष्ठे देवालयेऽपि वा।
शुचौ देशे गृहे वापि काले सिद्धिकरे तिथौ॥
नक्षत्रे शुभयोगे च सर्वदोषविवर्जिते।
अनुगृह्य ततो दद्याज्ज्ञानं मम यथाविधि॥
स्वरेणोच्चारयेन् सम्यगेकान्तेऽतिप्रसन्नधीः।
उच्चार्योच्चारयित्वा तमावयोर्मन्त्रमुत्तमम्॥

प्रणवेन क्षिपेत्तु द्रव्याण्यालोक्य बुद्धिमान्।
अरुद्रो वा सरुद्रोवा सकृत्पञ्चाक्षरेण यः॥
पूजयेत्पतितो वापि मूढो वा मुच्यते नरः।
षडक्षरेण वा देवि तथा पञ्चाक्षरेण वा॥

सौर पुराणे ६५ अ०

पंचाक्षरेण मन्त्रेण पत्र पुष्पमथापि वा।
यः प्रयच्छति शर्वाय तदनन्तफलं सकृत्॥
दीक्षितोऽदीक्षितो वाऽपि विधानादन्यथाऽपि वा।
पञ्चाक्षरं जपेद्यस्तु शिवस्यानुचरो भवेत्॥
पंचाक्षरेण मन्त्रेण बिल्वपत्रैः शिवार्चनम्।
करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदम्॥

स्कंदपुराणे ब्र० उ० खं० अ० ३

अहो ईश्वरपूजायाः माहात्म्यं विस्मयावहम्।
पत्रमात्रेण संतुष्टो यो ददाति निजं पदम्॥
पञ्चाक्षरं परममन्त्रमशेषवेद वेदान्तसारमतिशोभनमादरेण॥
जप्त्वा सुराः प्रणवसंयुतमम्बिकेश दृष्ट्वा सभापतिमशेष गुरुं नतास्ते॥

---

## अथ राम मंत्र महिमा।

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपद प्राप्तये प्रस्थितस्य।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम॥

---

## कलिसंतरणोपनिषत्।

हरिः ॐ। द्वापरान्ते नारदो ब्रह्माणं जगाम कथं भगवन् गां पर्यटन् कलिं सन्तरेयमिति। सहोवाच ब्रह्मा साधु पृष्टोऽस्मि सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि। भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति। नारदः पुनः पप्रच्छ तन्नाम किमिति। सहोवाच हिरण्यगर्भः

हरे राम हरे राम राम राम हरे हरे॥
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे॥

चत्वारिंशत्समावृत्ति प्राणानायम्य संस्मरेत्।
मन्त्रमन्त्रार्थविद्धीमानशक्तः शक्तितो जपेत्॥
पञ्चकं त्रिकमेकं वा प्राणायामं समाचरेत्।
अगर्भं वा सगर्भं वा सगर्भस्तत्र शस्यते॥
सगर्भादपि साहस्रः सध्यानो जप उच्यते।
एषु पञ्चविधेष्वेकः कर्त्तव्यः शक्तितो जपः॥

## जपमाला

अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम्।
रेखयाष्टगुणं विद्यात् पुत्रजीवैर्दशाधिकम्॥
शतं स्याच्छङ्खमणिभिः प्रवालैस्तु सहस्रकम्।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते॥
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत्॥
त्रिंशदक्षैः कृता माला धनदा जपकर्मणि।
सप्तविंशतिसंख्यातैरक्षैः पुष्टिप्रदा भवेत्॥
पञ्चविंशतिसंख्यातैः कृता मुक्तिं प्रयच्छति।
अक्षैस्तु पञ्चदशभिरभिचारफलप्रदा॥

## जपस्थानम्

गृहे जपं समं विद्याद्गोष्ठे शतगुणं विदुः।
पुण्यारण्ये तथारामे सहस्रगुणमुच्यते॥
अयुतं पर्वते पुण्ये नद्यां लक्षमुदाहृतम्।
कोटिं देवालये प्राहुरनन्तं मम सन्निधौ॥
सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च।
विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः॥
तत्पूर्वाभिमुखं वश्यं दक्षिणञ्चाभिचारकम्।
पश्चिमं धनदं विद्यादौत्तरं शान्तिदं भवेत्॥
सूर्याग्निविप्रदेवानां गुरूणामपि सन्निधौ।
अन्येषाञ्च प्रशस्तानां मन्त्र न विमुखो जपेत्॥

आब्रह्म बीजदोषाश्च नियमातिक्रमोद्भवाः।
स्त्रीणां च पुरुषाणां च मन्त्रेणानेन नाशिताः॥
येषु येष्वपि देशेषु रामभद्र उपास्यते।
दुर्भिक्षादि भयं तेषु न भवेत्तु कदाचन॥
शान्तः प्रसन्नवदनो ह्यक्रोधो भक्तवत्सलः।
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम्।
ददात्यायुष्यमैश्वर्यं मन्ये विष्णुपदं च यत्॥
यथैव वटबीजस्थः प्राकृतश्च महान् द्रुमः॥
तथैव रामबीजस्थं जगदेतच्चराचरम्॥
श्री रामाय नमो ह्येष तारकब्रह्मनामकम्।
नाम्नां विष्णोः सहस्त्राणां तुल्य एव महामनुः॥
भर्जनं भवबीजानामर्जनं सर्वसम्पदाम्।
तर्जनं यमदूतानां रामनामेति गर्जनम्॥

---

## राम मंत्र माहात्म्यम्।

### स्कंदपुराणे चातुर्मास्यमाहात्म्ये २४ अध्याये

ततः सा विश्वजननी पार्वती प्राह शङ्करम्।

महेश्वरी उवाच।

इयं ते करगा नित्यमक्षमाला महेश्वर।
त्वया किं जप्यते देव सन्देहयति मे मनः॥
त्वमेकः सर्वभूतानामादिकृत्सकलेश्वरः।
न माता न पिता बन्धुस्तव जातिर्न कश्चन॥
अहं त्वत्तः परं किञ्चिद्वेद्मि नास्तीति किञ्चन।
श्रमेण त्वं समायुक्तः श्वासोच्छ्वासपरायणः॥
जपन्नपि महाभक्त्या दृश्यसे त्व मया सदा।
त्वत्तः परतरं किञ्चिद्यत्त्वं ध्यायसि चेतसा॥
तन्मे कथय देवेश यद्यहं दयिता तव।
इति पृष्टस्तदा शम्भुरुवाच हरिसेवकः॥

महेश्वर उवाच।

हरेर्नाम सहस्त्राणां सारं ध्यायामि नित्यशः॥
जपामि रामनामाद्भमवतारं तु सत्तमम्।

गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा शुचेर्वापि मन्त्रोऽयं न च निष्फलः ॥
अनाचारवतां पुंसामविशुद्धषडध्वनाम् ।
अनादिष्टोऽपि गुरुणा मन्त्रोऽयं न च निष्फलः ॥
अन्त्यजस्यापि मूर्खस्य मूढस्य पतितस्य च ।
निर्मर्यादस्य नीचस्य मन्त्रोयं न च निष्फलः ॥
सर्वावस्थां गतस्यापि मयि भक्तिमतः परम् ।
सिध्यत्येव न सन्देहो नापरस्य तु कस्यचित् ॥
न लग्न-तिथि नक्षत्र वार योगादयः प्रिये ।
अस्यात्यन्तमवेक्ष्याः स्युर्नैष सुप्तः सदोदितः ॥
न कदाचिन्न कस्यापि रिपुरेष महामनुः ।
सुसिद्धो वापि सिद्धो वा साध्यो वापि भविष्यति ॥
सिद्धेन गुरुणादिष्टः सुसिद्ध इति कथ्यते ।
असिद्धेनापि वा दत्तः सिद्धः साध्यस्तु केवलः ॥
असाधितः साधितो वा सिध्यत्येव न संशयः ।
श्रद्धातिशययुक्तस्य मयि मन्त्रे तथा गुरौ ॥
तस्मान्मन्त्रान्तरांस्त्यक्त्वा सापायानधिकारतः ।
आश्रयेत् परमां विद्यां हृद्यां पंचाक्षरीं बुधः ॥
मन्त्रान्तरेषु सिद्धेषु मन्त्र एष न सिध्यति ।
सिद्धे त्वस्मिन् महामन्त्रे ते च सिद्धा भवन्त्युत ॥
यथा देवेष्वलभ्योऽस्मि लब्धेष्वपि महेश्वरि ।
मयि लब्धे तु ते लब्धा मन्त्रेष्वेष समो विधिः ॥
ये दोषाः सर्वमन्त्राणां न तेऽस्मिन् सम्भवन्त्यपि ।
अस्य मन्त्रस्य जात्यादीननपेक्ष्य प्रवर्त्तनात् ॥
तथापि नैव क्षुद्रेषु फलेषु प्रतियोगिषु ।
सहसा विनियुञ्जीत यस्मादेष महाफलः ॥

उपमन्युरुवाच ।

एवं साक्षान्महादेव्यै महादेवेन शूलिना ।
हिताय जगतामुक्तः पञ्चाक्षरविधिर्यथा ॥
य इदं कीर्तयेद्भक्त्या शृणुयाद्वा समाहितः ।
सर्वपापविनिर्मुक्तः प्रयाति परमां गतिम् ॥

इति श्रीशैवे महापुराणे वायवीयसंहितायामुत्तरभागे पञ्चाक्षरमन्त्रमाह-
निरूपणं नाम द्वादशोऽध्यायः ॥१२॥

# रामनाम माहात्म्यम्

महारामायणे श्रीशिववाक्य श्रीपार्वतीं प्रति—

शृणुष्व मुख्य नामानि वक्ष्ये भगवतः प्रिये।
विष्णुर्नारायणः कृष्णो वासुदेवो हरिः स्मृतः॥
ब्रह्म विश्वम्भरोऽनंतो विश्वरूपः कलानिधिः।
कल्मषघ्नो दयामूर्तिः सर्वगः सर्वसेवितः॥
परमेश्वरस्य नामानि संत्यनेकानि पार्वति।
एकादेकं महत्स्वच्छमुच्चरन्मोक्षदायकम्॥
नाम्नामेव च सर्वेषां रामनाम प्रकाशकः।
ग्रहाणाञ्च यथा भानुर्नक्षत्राणां यथा शशी॥
देवानांच यथा शक्रो नराणां भूपतिर्यथा।
सर्व लोकेषु गोलोकः सरयूर्निम्नगासुच॥
निर्जराणां यथानंतो भक्तानामजनीसुतः।
शक्तीनां च यथा सीता रामो भगवतामपि॥
भूधराणां यथा मेरुः सरसां सागरो यथा।
कामधेनुर्गवांमध्ये धन्विनां मन्मथो यथा॥
पक्षिणां वैनतेयश्च तीर्थानां पुष्करो यथा।
अहिंसा सर्वधर्माणां साधुष्वेऽपि दया यथा॥
मेदिनी क्षमिणां मध्ये मणीनां कौस्तुभो यथा।
धनुषां च यथा शार्ङ्गं खड्गानां नन्दको यथा॥
ज्ञानानां ब्रह्मज्ञानं च भक्तीनां प्रेमलक्षणा।
प्रणवः सर्वमंत्राणां रुद्राणामहमेवच॥
कल्पद्रुमश्च वृक्षाणां यथाऽयोध्या पुरीषु च।
कर्मणां भगवत्कर्म अकारश्च स्वरेष्वपि॥
किमत्र बहुनोक्तेन सम्यग्भगवतः प्रिये।
नाम्नां तथा च सर्वेषां राम नाम परं महत्॥

---

## अथ श्रीराम स्तुतिः

नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे।
चिन्मयानंदरूपाय सीतायाः पतयेनमः॥

वैश्यस्तु पञ्च लक्षेण वैश्यत्वमपनेष्यति ।
पुनश्च पञ्चलक्षेण मन्त्रक्षत्रिय उच्यते ॥
पुनश्च पञ्चलक्षेण क्षत्रत्वमपनेष्यति ।
पुनश्च पञ्चलक्षेण मन्त्रब्राह्मण उच्यते ॥
शूद्रश्चैव नमोन्तेन पञ्चविंशति लक्षतः ।
मन्त्र विप्रत्वमापद्य पश्चाच्छुद्धोभवेद्विजः ॥
नारीवाथ नरोवाथ ब्राह्मणो वाऽन्य एव वा ।
नमोऽन्तं वा नमः पूर्वमातुर सर्वदा जपेत् ॥

## अथ शिवपूजनविधिः

### शिवपुराणे ७ अध्याये

ऋषय ऊचुः—

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रै र्वा शम्भु पूजनम् ।
कथं कार्य्यं तथा ब्रूहि यथा व्यासमुखाच्छ्रुतम् ॥
तच्छ्रुत्वा वचनं तेषां वचनं श्रुतिसम्मितम् ।
उवाच सकलं तत्र प्रश्नस्यानुक्रमेण तु ॥

सूत उवाच—

सम्यक् पृष्ट भवद्भिश्च यद्रहस्य मुनीश्वराः ।
तदहं कथयाम्यद्य यथाबुद्धि यथाश्रुतम् ॥
यो वै मानुषमाश्रित्य सुखसन्तानकामुकः ।
तेन पूज्यो महादेवः सर्वकामार्थ साधकः ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च विधिवत्क्रमात् ।
प्रातः काले समुत्थाय मुहूर्ते ब्राह्मसंज्ञके ॥
विष्णोश्च स्मरणं कृत्वा गुरोर्श्चवाऽथवा पुनः ।
तीर्थानां स्मरणं कृत्वा ध्यानञ्चैव हरेरिति ॥
देशकालाविरोधेन स्नानं कार्य्यं समन्त्रकम् ।
यथा योग्य विधिं कृत्वा पूजाविधिमथाचरेत् ॥
आचामत्रितयं कृत्वा प्रक्षाल्य च पुन पुन ।
प्राणायाम त्रयं कृत्वा ध्यायेद्देवं त्रियम्बकम् ॥
सर्वत्र प्रणवेनैव षडङ्गन्यासमाचरेत् ।
कृत्वार्घादिप्रयोगञ्च ततः पूजां समाचरेत् ॥

सहस नाम सम सुनि शिव बानी। जपहिं जे पियके संग भवानी॥
हरपे हेतु हेरि हर ही को। किय भूपन तिय भूपन ती को॥
नाम प्रभाव जान शिव नीको। कालकूट फल दीन अमी को।
वर्षा ऋतु रघुपति भगति तुलसी शालि सुदास।
रामनाम वर बरनयुग सावन भादों मास॥
आखर मधुर मनोहर दोऊ। बरन विलोचन जन जिय जोऊ॥
सुमिरत सुखद सुलभ सब काहू। लोक लाहु परलोक निबाहू॥
कहत सुनत समुझत सुठि नीके। राम लखन सम प्रिय तुलसी के॥
बरनत बरन प्रीति बिलगाती। ब्रह्म जीव सम सहज संघाती॥
नर नारायण सरिस सुभ्राता। जग पालक विशेष जन त्राता॥
भगति सुतिय कल करन विभूपन। जग हित हेतु विमल विधुपूपन॥
स्वाद तोप सम सुगति सुधाके। कमठ शेष समधर वसुधाके॥
जन मन कंज मंजु मधुकर से। जीह जसोमति हरि हलधर से॥
एक छत्र एक मुकुटमनि सब बरननि पर जोउ।
तुलसी रघुवर नाम के बरन विराजत दोउ॥
राम नाम मनि दीप धरु जीह देहरी द्वार।
तुलसी भीतर बाहिरउ जो चाहसि उंजियार॥
नाम सप्रेम जपत अनयासा। भगत होहिं मुदमंगल बासा॥
राम एक तापस तिय तारी। नाम कोटि खल कुमति सुधारी॥
सबरी गीध सुसेवकनि सुगति दीन्ह रघुनाथ।
नाम उधारे अमित खल वेद विदित गुन गाथ॥
नाम गरीब अनेक निवाजे। लोक वेद वर विरद विराजे॥
नाम लेत भवसिन्धु सुखाहीं। करहु विचार सुजन मन मांही॥
सेवक सुमिरत नाम सप्रीती। बिनुश्रम प्रवल मोह दल जीती॥
ब्रह्म राम ते नाम बड़ बरदायक बर दानि।
रामचरित शतकोटि मँह लिय महेश जिय जानि॥
नाम प्रसाद शम्भु अविनाशी। साजु अमंगल मंगलराशी॥
शुक सनकादि साधु मुनि जोगी। नाम प्रसाद ब्रह्मसुख भोगी॥
नारद जानेउ नाम प्रतापू। जग प्रिय हरि हरिहर प्रिय आपू॥
नाम जपत प्रभु कीन्ह प्रसादू। भगत शिरोमनि भे प्रह्लादू॥
ध्रुव सगलानि जपेउ हरि नाऊँ। पायेउ अचल अनूपम ठाऊँ॥
सुमिरि पवनसुत पावन नामू। अपने वस करि राखेउ रामू॥

इति षोडशकं नाम्नां कलिकल्मष नाशनम् ॥
नातः परतरोपायः सर्ववेदेषु दृश्यते ॥
इति षोडश कलस्य जीवस्यावरण विनाशकम् ॥
ततः प्रकाशते परंब्रह्म मेघापाये रविरश्मिमंडलीवेति। पुन नारदः पप्रच्छ भगवन् कोऽस्य विधिरिति। तं होवाच नास्य विधिरिति सर्वदा शुचिरशुचिर्वा पठन् ब्रह्मणः सलोकतां समीपतां सरूपतां सायुज्यतामेति। यदास्य षोडशीकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति वीरहत्याम्। स्वर्णस्तेयात् पूतो भवति। पितृदेवमनुष्याणामपकारात् पूतो भवति। सर्वधर्मपरित्यागपापात् सद्यः शुचितामाप्नुयात्। सद्यो मुच्यते सद्यो मुच्यते इत्युपनिषत्। हरिः ॐ तत्सत् ॥

---

## रामतापनी उपनिषत्

अथ हैनं भारद्वाजो याज्ञवल्क्यमुपसमेत्योवाच श्रीराममन्त्रराजस्य माहात्म्यमनुब्रूहीति। सहोवाच याज्ञवल्क्यः।

स्वप्रकाशः परं ज्योतिः स्वानुभूत्यैक चिन्मयः ॥
तदेव रामचन्द्रस्य मनोराद्यक्षरः स्मृतः ॥ १ ॥
अखण्डैकरसानन्दस्तारकब्रह्मवाचकः ॥
रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ॥ २ ॥
नमः पदं सुविज्ञेयं पूर्णानन्दैककारणम् ॥
सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः ॥ इति ॥

य एतं मन्त्रराजं श्रीरामचन्द्रषडक्षरं नित्यमधीते सोऽग्निपूतो भवति। स वायुपूतो भवति। स आदित्यपूतो भवति। स सोमपूतो भवति। स ब्रह्मपूतो भवति। स विष्णुपूतो भवति। स रुद्रपूतो भवति। स सर्वैर्देवैर्ज्ञातो भवति। सर्वक्रतुभिरिष्टवान् भवति। तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि सफलानि भवन्ति। श्रीरामचन्द्रमनुस्मरणेन दशपूर्वान्दशोत्तरान् पुनाति सपङ्क्ति पावनो भवति। स महान् भवति। सोऽमृतत्वं च गच्छति ॥ अत्रैते श्लोका भवन्ति।

### श्री रामाय नमः

षडक्षरोऽयं मन्त्रः स्यात्सर्वाघौघनिवारणः।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः ॥

कह नानक सोई नर सुखिया राम नाम गुन गावे।
और सकल जग माइया निरभय पद नहिं पावै॥
राम न जपहु अभाग तुम्हारा जुग दाता प्रभु राम हमारा॥
खिन महि राम नामि किलविखि काटे भये पवित्र शरीरा।
नानक राम नाम विस्तारा कञ्चन भरा मनूरा॥
पतित असंख्य पुनीत करि पुन पुन बलिहारि।
नानक राम नाम जपि पावको किलविष दाहनहार॥
राम नाम जपि हिरिदे माहीं नानक पति सेती घरि जाहीं॥
अण म गिया दानु दीजे दाते तेरी भगति भरी भण्डारा।
राम नाम विनु मुकुति न होई नानक कहे विचारा॥
सबते ऊँच राम परगासा। निसि वासर जपु नानकदासा॥
राम किरिपा करि लेहु उबारे। जिमि उपकरी द्रोपदी
आनि रही हरि लाज नियारे॥
शास्त्र वेद सोधि सोधि देखे मुनि नारद वचन प्रकारे।
राम नाम पढहु गति पावहु सतसगति गुरु निस्तारे॥

तनु धनु सम्पय सुख दीयो अरु जिह नीके धाम।
कहु नानक सुनु रे मना सिमिरत काहे न राम॥
पतित उधारन भै हरन हरि अनाथ के नाथ।
कहु नानक तिह जानिये सदा बसतु तुम साथ॥
घटि घटि में हरिजू बसै संतन कहियो पुकार।
कहु नानक तिह भजु मना भउनिधि उतरहि पार॥
जनम जनम भरमत फिरिओ मिटिओ न जम का त्रासु।
कहु नानक हरि भजु मना निरभै पावहि बासु॥
बलु छुटियो बंधनपरे कछू न होतु उपाइ।
कहु नानक अब ओट हरि गज जिउ होहु सहाइ॥
संग सखा सभ तजि गये कोउ न निबहिओ साथ।
कहु नानक इह विपति में टेक एक रघुनाथ॥
राम नाम उरि मैं गहिओ जाके सम नहिं कोय।
जिह सिमरत संकट मिटै दरसु तुहारा होय॥
रे मन ता कउ धियाइयै सभ विधि जाकै हाथि।
राम नाम धन संचिये साथ निबहै साथि॥

चतुर्विंशति संख्याकान् प्रादुर्भावान् हरेर्गुणान् ।
रामेति द्व्यक्षरजपः सर्वपापापनोदकः ॥
गच्छंस्तिष्ठञ्छयानो वा मनुजो रामकीर्तनात् ।
इह निर्वृतिमायाति प्रान्ते हरिगणो भवेत् ॥
रामेति द्व्यक्षरो मन्त्रो मन्त्रकोटिशताधिकः ।
सर्वासां प्रकृतीनां च कथितः पापनाशकः ॥
न रामादधिकं किञ्चित्पठनं जगतीतले ।
रामनामाश्रया ये वै न तेषां यमयातना ॥
ये च दोषा विघ्नकरा मृतका विग्रहाश्च ये ।
रामनाम्नैव विलयं यान्ति नात्र विचारणा ॥
रमते सर्वभूतेषु स्थावरेषु चरेषु च ।
अन्तरात्मस्वरूपेण यच्च रामेति कथ्यते ॥
रामेति मन्त्रराजोऽयं भयव्याधिविषूदकः ।
रणे विजयदश्चापि सर्वकार्यार्थसाधकः ॥
सर्वतीर्थफलः प्रोक्तो विप्राणामपि कामदः ।
रामचन्द्रेति रामेति रामेति समुदाहृतः ॥
द्व्यक्षरो मन्त्रराजोऽयं सर्वकार्यकरो भुवि ।
देवा अपि प्रगायन्ति रामनाम गुणाकरम् ॥
तस्मात्त्वमपि देवेशि रामनाम सदा वद ।
रामनाम जपेद्यो वै मुच्यते सर्वकिल्बिषैः ॥
सहस्रनामजं पुण्यं रामनाम्नैव जायते ।
चातुर्मास्ये विशेषेण तत्पुण्यं दशधोत्तरम् ।
हीनजातिप्रजातानां महद्दहति पातकम् ॥
रामो ह्ययं विश्वमिदं समग्रं
स्वतेजसा व्याप्य जनान्तरात्मनः ।
पुनाति जन्मान्तरपातकानि
स्थूलानि सूक्ष्माणि क्षणाच्च दग्ध्वा ॥

---

## गुरु रामदास समर्थ कृत ।
## ( दासबोध से )

सकल जनामधें नाम । राम नाम उत्तमोत्तम ।
श्रम जाउनी विश्राम । चन्द्रमौली पावला ॥
नामाचा महिमा थोर । रूप कैसें उत्तरोत्तर ।
परात्पर परमेश्वर । त्रयलोक्य धर्त्ता ॥
आत्माराम चहुं कड़े । लोक यावडे जिकडे तिकडे ।
देहे पडे मृत्यु घडे । आत्मयाविण ॥
जीवात्मा शिवात्मा परमात्मा । जगदात्मा विश्वात्मा गुप्तात्मा ।
आत्मा अंतरात्मा सूक्षात्मा । देवदानव मानवीं ॥
सकल मार्ग चालती बोलती । अवतार पंगतीची गती ।
आत्म्या करितां होत जाती । ब्रह्मादिक ॥
नादरूप जोतीरूप । साक्षरूप सत्तारूप ।
चैतन्यरूप सत्वरूप । द्रष्टारूप जाणिजे ॥
नरोत्तमु विरोत्तमु । पुरुषोत्तमु रघोत्तमु ।
सर्वोत्तमु उत्तमोत्तमु । त्रयलोक्यवासी ॥

---

## अनन्य भक्ति और प्रार्थना ।
## तुलसी ग्रंथावली से

एक भरोसो एक बल एक आस विस्वास ।
रामरूप स्वाती जलद चातक तुलसीदास ॥
नातो नाते राम के राम सनेह सनेहु ।
तुलसी माँगन जोरि कर जनम जनम सिव देहु ॥
सब साधन को एक फल जेहि जान्यो सोइ जान ।
ज्यों त्यों मन मन्दिर बसहिं राम धरे धनु बान ॥
रामचन्द्र मुख चन्द्रमा चित चकोर जब होइ ।
राम राज सब काज सुभ समय सुहावन सोइ ॥
राम हैं मातु पिता गुरु बन्धु औ संगी सखा सुत स्वामि सनेही ।
राम की सौंह भरोसो है राम को राम रँग्यो रुचि राच्यो न केही ॥
जीयत राम मुये पुनि राम सदा रघुनाथहि की गति जेही ॥
सोई जिये जग में तुलसी नतु डोलत और मुये धरि देही ॥

सर्वलोकशरण्याय रामचन्द्राय वेधसे ।
ब्रह्मानंदैकरूपाय सीतायाः पतये नमः ॥
विशुद्ध ज्ञानदेहाय रघुनाथाय विष्णवे ।
अंतःकरण संशुद्धिं देहि मे भक्तवत्सल ॥
नमो नारायणानंत श्रीराम करुणानिधे ।
मामुद्धर जगन्नाथ घोर संसार सागरात् ॥
रामचन्द्र महीपाल शरणागत तत्पर ।
मां त्राहि सर्वलोकेश तापत्रय महानलात् ॥
श्रीकृष्ण श्रीकर श्रीश श्रीराम श्रीनिधे हरे ।
श्रीनाथ श्रीमहाविष्णो श्रीनृसिंह कृपानिधे ॥
गर्भजन्मजराव्याधि घोर संसारसागरात् ।
मामुद्धर जगन्नाथ कृष्ण विष्णो जनार्दन ॥
श्रीराम गोविन्द मुकुन्द कृष्ण श्रीनाथ विष्णो भगवन्मुरारे ।
श्रीवल्लभानन्त जगन्निवास श्रीरामराजेन्द्र नमो नमस्ते ॥
नमोस्तु नारायण विश्वमूर्ते नमोस्तुते शाश्वत सर्वयोनये ।
त्वमेव विश्वं सचराचरं च त्वयैव सर्वं प्रवदंति सतः ॥
नमोस्तु ते कारण कारणाय नमोस्तु कैवल्य फलप्रदाय ।
नमोनमस्तेस्तु जगन्मयाय वेदांत वेद्याय नमोनमस्ते ॥
नमो नमस्ते भरताग्रजाय नमोस्तु यज्ञप्रतिपालकाय ।
अनन्त विश्वेश हरे मुकुंद गोविन्द विष्णो भगवन्नमस्ते ॥
श्रीवल्लभानंत जगन्निवास श्रीरामराजेन्द्र नमोनमस्ते ।
त्वया सनाथं कुरु मामनाथं नाथ प्रभो दीनदयालुमूर्ते ॥

---

## राम नाम महिमा

### तुलसीकृत रामायणे

बन्दौं नाम राम रघुबर को । हेतु कृशान भानु हिमकर को ॥
*विधि हरिहर मय वेद प्रान सो । अगुन अनूपम गुन निधान सो ॥*
महामंत्र जो जपत महेशू । काशी मुकति हेतु उपदेशू ॥
महिमा जासु जान गनराऊ । प्रथम पूजियत नाम प्रभाऊ ॥
जान आदि कवि नाम प्रतापू । भयउ शुद्ध करि उलटा जापू ॥

जो भुशुण्डि मन मानस हंसा । सगुण अगुण जेहि निगम प्रशंसा ॥
देखहि हम सो रूप भरिलोचन । कृपा करहु प्रणतारति मोचन ॥
तुम ब्रह्मादि जनक जगस्वामी । ब्रह्म सकल उर अन्तरयामी ॥
अस समुझत मन संशय होई । कहा जो प्रभु प्रमाण पुनि सोई ॥
जे निज भक्त नाथ तव अहईं । जो सुख पावहिं जो गति लहईं ॥

सोइ सुख सोइ गति सोइ भगति सोइ निजचरण सनेहु ।
सोइ विवेक सोइ रहनि प्रभु मोहिं कृपाकरि देहु ॥

## भागवते

नाम सङ्कीर्त्तनं यस्य सर्वपाप प्रणाशनम् ।
प्रणामो दुःख शमन स्तं नमामि हरिं परम् ॥
कृष्ण कृष्ण महाभाग विश्वात्मन्विश्व भावन ।
प्रपन्नं पाहि गोविन्द शरणागत वत्सल ॥
नान्यत्तव पदाम्भोजात् पश्यामि शरणं नृणाम् ।
बिभ्यतां मृत्यु संसारादीश्वरस्यापवर्गिकात् ॥
नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।
योगेश्वराय योगाय त्वामहं शरणं गतः ॥

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्य मृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥

त्वां प्रपन्नाय भक्ताय गतिमिच्छा जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥

श्रीकृष्णः शरणं मम ।
श्रीकृष्णार्पणमस्तु ॥



अपत अजामिल गजु गनिकाउ। भए मुकत हरि नाम प्रभाउ॥
कहउँ कहाँ लगि नाम बड़ाई। राम न सकहिं नाम गुन गाई॥
नाम राम को कल्प तरु कलि कल्यान निवास।
जो सुमिरत भव भांगते तुलसी तुलसी दास॥
ध्यान प्रथम युग मख विधि दूजे। द्वापर परितोषत प्रभु पूजे॥
कलि केवल मल मूल मलीना। पाप पयोनिधि जन मन मीना॥
नाम कामतरु काल कराला। सुमिरत सुखद सुलभ सब काला॥
राम नाम कलि अभिमत दाता। हित परलोक लोक पितु माता॥
नहिं कलि करम न भगति विवेकू। राम नाम अवलम्बन एकू॥
कालनेम कलि कपट निधानू। नाम सुमति समरथ हनुमानू॥
राम नाम नर केशरी कनक कशिपु कलि काल॥
जापक जन प्रह्लाद जिमि पालिहिं दलि सुरसाल॥
राम सच्चिदानन्द दिनेसा। नहिं तहँ मोह निसा लव लेसा॥
सहज प्रकास रूप भगवाना। नहिं तहँ पुनि विज्ञान बिहाना॥
हरष विषाद ज्ञान अज्ञाना। जीव धरम अहमित अभिमाना॥
राम ब्रह्म व्यापक जग जाना। परमानंद परेस पुराना॥
जेहि इमि गावहिं वेद बुध जाहि धरहिं मुनि ध्यान।
सोइ दसरथ सुत भगत हित कोसलपति भगवान॥
कासी मरत जंतु अवलोकी। जासु नामबल करउँ विशोकी॥
सोइ प्रभु मोर चराचर स्वामी। रघुवर सब उर अंतर जामी॥
विवसहु जासु नाम नर कहहीं। जनम अनेक संचित अघ दहहीं॥
सादर सुमिरन जे नर करहीं। भव वारिधि गोपद इव तरहीं॥
राम सो परमातमा भवानी। तहँ भ्रम अति अविहित तव बानी॥
अस संसय आनत उर माहीं। ज्ञान विराग सकल गुन जाहीं॥

---

## गुरु नानक कृत रामनाम महिमा।

राम नाम जपु दिनसु राती गुरुमुख हरि धनु जानु।
सब सुख हरिरस भोगने सन्त सभा मिलि ज्ञान॥
नानक मन समुझाइये गुरुके सबदि सलाह।
राम नाम रति आसरन मरमुति नाह॥

इत्युक्त लक्षणा प्राणि दुःख ध्वंसन तत्परा।
दया बलवतां शोभा न त्याज्या धर्मचारिभिः॥
पुण्योऽयं भारतोवर्षो हिन्दुस्थानः प्रकीर्तितः।
वरिष्ठः सर्व देशानां धन धर्म सुखप्रद॥
गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारत भूमि भागे।
स्वर्गापवर्गस्य च हेतु भूते भवन्ति भूयः पुरुषाः सुरत्वात्॥
मातृभूमिः पितृभूमिः कर्मभूमिः सुजन्मनाम्।
भक्ति मर्हति देशोऽयं सेव्यः प्राणै र्धनैरपि॥
चातुर्वर्ण्यं यत्र सृष्ट गुणकर्म विभागशः।
चत्वार आश्रमाः पुण्याः चतुर्वर्गस्य साधकाः॥
उत्तमः सर्वधर्माणां हिन्दू धर्मोऽयमुच्यते।
रक्ष्यः प्रचारणीयश्च सर्वलोकहितैषिभिः॥

---

## अनुवाद

परमेश्वर को प्रणाम कर सब प्राणियों के उपकार के लिये, बुराई करने वालों को दाबने और दण्ड देने के लिये, धर्मस्थापन के लिये धर्म के अनुसार सङ्गठन मिलाप-कर गाँव गाँव में सभा करनी चाहिये। गाँव गाँव में कथा बिठानी चाहिये। गाँव गाँव में पाठशाला और अखाड़ा खोलना चाहिये।

और पर्व पर्व पर मिलकर महोत्सव मनाना चाहिये॥

सब भाइयों को मिलकर अनाथ की, विधवाओं की, मन्दिरों की और गौ माता की रक्षा करनी चाहिये, और इन सब कामों के लिये दान देना चाहिये॥

स्त्रियों का सम्मान करना चाहिये॥

दुखियों पर दया करनी चाहिये॥

उन जीवों को नहीं मारना चाहिये जो किसी पर चोट नहीं करते। मारना उनको चाहिये जो आततायी हों, अर्थात् जो स्त्रियों पर या किसी दूसरे के धन या प्राण पर वार करते हों या जो किसी

## कबीरदास कृत रामनाम महिमा।

तजि अभिमान लेहु मन मोलि राम नाम हिरदै महँ तोलि
अब कहु राम भरोसा तोरा तब काहू का कौन निहोरा।
कहै कबीर जो खोजहु जहाना राम समान न देखहु आना।

कोइ गावै कोई सुनै हरीनाम चितलाय।
कह कबीर ससय नहीं अंत परमगति पाय॥

राम जपहु जिअ ऐसे ऐसे। ध्रव प्रह्लाद जपेउ जिअ जैसे।
राम राम जपि निरमल भए। जनम जनम के किलिविष गए॥
रमत राम जनम मरण निवारै। उच्चरत राम भव पार उतारै॥
रसना राम गुण रमि रमि पीजै। गुणातीत निर्मूलक लीजै॥
निरगुन ब्रह्म जपो रे भाई। जेहि सुमिरत सुधिबुधि सब पाई॥
विष तजि राम न जपसि अभागे। का बूडे लालच के आगे॥
ते सब तरे राम रस स्वादी। कह कबीर बूडे बकवादी॥
मनरे जरते राम कह्यो रे। फिरि कहिवे को कछु न रह्यो रे॥
का भो जोग जग्य जप दाना। जो तैं राम नाम नहिं जाना॥

काम क्रोध दोउ भारे। गुरु प्रसाद सब तारे॥
कह कबीर भ्रम नाशो। राम मिले अविनाशी॥

राम का नाम संसार में सार है राम का नाम अमृत बानी।
राम के नाम ते कोटि पातक टरे राम का नाम विस्वास मानी॥
राम का नाम लै साधु सुमिरन करें राम का नाम लै भक्ति ठानी।
राम का नाम लै सूर सनमुख लरें पैठि संग्राम में युद्ध ठानी॥
है परम जोति औगुन निराकार है, तासु को नाम निरकार मानी।
रूप बिन रेख बिन निगम अस्तुति करें सत्त का राह अनकथ कहानी॥

पानी केरा पूतला राखा पवन सँचार।
नाना बानी बोलता जोति धरी करतार॥
एक शब्द में सब कहा सब ही अर्थ विचार।
भजिये निर्गुन नाम का तजिये विषै विकार॥

---

हर एक को उचित है कि यह चाहे कि सब लोग सुखी रहें सब नीरोग रहें, सबका भला हो। कोई दुःख न पावे। प्राणियों के दुःख को दूर करने में तत्पर यह दया बलवानों की शोभा है। धर्म के अनुसार चलने वालोंको कभी इसका त्याग नहीं करना चाहिये

यह भारतवर्ष जो हिन्दुस्तान नाम से प्रसिद्ध है—बड़ा पवित्र देश है। धन धर्म और सुख का देने वाला यह देश सब देशों से उत्तम है।

'कहते हैं कि देवता लोग यह गीत गाते हैं कि वे लोग धन्य हैं जिनका जन्म इस भारत भूमि में होता है, जिसमें जन्म लेकर मनुष्य स्वर्ग का सुख और मोक्ष दोनों को पा सकता है' ॥

यह हमारी मातृ-भूमि है, यह हमारी पितृ-भूमि है। जो लोग सुजन्मा हैं—जिनके जीवन बहुत अच्छे हुवे हैं, राम, कृष्ण, बुद्ध आदि महापुरुषों के, महात्माओं के, आचार्यों के, ब्रह्मर्षियों और राजर्षियों के, गुरुवों के, धर्मवीरों के, शूरवीरोंके, दानवीरों के, स्वतंत्रता के प्रेमी देश भक्तों के उज्ज्वल कामों की यह कर्म-भूमि है। इस देशमें हम को परम भक्ति करनी चाहिये और प्राणों से और धन से भी इसको सेवा करनी चाहिये।

जिस धर्म में परमात्मा ने गुण और कर्म के विभाग से ब्राह्मण क्षत्री वैश्य शूद्र ये चार वर्ण उपजाये और जिसमें धर्म, अर्थ, काम और मोक्ष इन चारों पुरुषार्थों के साधन में सहायक मनुष्य का जीवन पवित्र बनाने वाले ब्रह्मचर्य, गृहस्थ, वानप्रस्थ और संन्यास ये चार आश्रम स्थापित हैं।

सब धर्मों से उत्तम इसी धर्म को हिन्दू धर्म कहते हैं। जो लोग सारे संसार का उपकार चाहते हैं उनको उचित है कि इस धर्म की रक्षा और इसका प्रचार करें।

---

प्रीयतां पुरुषोत्तमः ॥

---

## ध्यान।

राम ब्रह्म चिन्मय अविनासी। सर्व रहित सब उरपुर वासी॥
आदि अन्त कोउ जासु न पावा। मति अनुमान निगम अस गावा॥
बिनु पद चलै सुनै बिनु काना। कर बिनु कर्म करै विधि नाना॥
आनन रहित सकल रस भोगी। बिनु वाणी वक्ता बड़ योगी॥
तन बिनु परस नयन बिनु देखा। ग्रहै घ्राण बिनु बास अशेखा॥
अस सब भाँति अलौकिक करणी। महिमा तासु जाइ किमि बरणी॥

दो०—जेहि इमि गावहिं वेद बुध जाहि धरहिं मुनि ध्यान।
सोइ दशरथ सुत भक्त हित कोशलपति भगवान॥

अगुण अरूप अलख अज जोई। भक्त प्रेमवश सगुण सो होई॥
जो गुण रहित सगुण सो कैसे। जल हिम उपल बिलग नहिं जैसे॥
जासु नाम भ्रम तिमिर पतङ्गा। तिहि किमि कहिय विमोह प्रसंगा॥
राम सच्चिदानन्द दिनेशा। नहिं तहं मोह निशा लवलेशा॥
सहज प्रकाश रूप भगवाना। नहिं तहं पुनि विज्ञान विहाना॥
हर्ष विषाद ज्ञान अज्ञाना। जीवधर्म अहमित अभिमाना॥
राम ब्रह्म व्यापक जगजाना। परमानन्द परेश पुराना॥

दो०—पुरुष प्रसिद्ध प्रकाश निधि प्रकट परावर नाथ।
रघुकुलमणि मम स्वामि सोइ कहि शिव नायउ माथ॥

जब जब होइ धर्म की हानी। बाढहिं असुर अधम अभिमानी॥
करहिं अनीति जाइ नहिं बरणी। सीदहिं विप्र धेनु सुर धरणी॥
तब तब प्रभु धरि विविध शरीरा। हरहिं कृपानिधि सज्जन पीरा॥

दो०—असुर मारि थापहिं सुरन राखहिं निजश्रुति सेतु।
जग विस्तारहिं विशद यश राम जन्म कर हेतु॥

---

## प्रार्थना

अगुण अखण्ड अनन्त अनादी। जेहि चिन्तहिं परमारथ वादी॥
नेति नेति जेहि वेद निरूपा। निजानन्द निरुपाधि अनूपा॥
सेवत सुलभ सकल सुखदायक। प्रणतपाल सचराचर नायक॥
जो अनाथ हित हम पर नेहू। तौ प्रसन्न है यह वर देहू॥
जो स्वरूप बस शिव मन माँहीं। जेहि कारण मुनि यतन कराहीं॥

## छात्रवृत्तिदानमाहात्म्यम् ।

गारुडे—छात्राणां भोजनाभ्यङ्गं वस्त्रं भिक्षामथापि वा ।
दत्वा प्राप्नोति पुरुषः सर्वकामान्न संशयः ॥
विवेकी जीवितं दीर्घं धर्मकामार्थमाप्नुयात् ।
सर्वमेव भवेद्दत्तं छात्राणां भोजने कृते ॥
वह्निपुराणे-यो वृत्तिं पठमानानां करोत्यनुदिनं नृप ।
स यज्ञफलमाप्नोति दानाच्छादनभोजनैः ॥
भारते—कुलो तिष्ठति यस्यान्नं विद्याभ्यासेन जीर्यति ।
गोत्राणि तारयेत्तस्य दश पूर्वान् दशापरान् ॥

विद्यागुरु विश्वनाथ जी के असीम अनुग्रह से हिन्दू राज्यों के अधिपतियों ने तथा अन्य धार्मिक धनवान् श्रद्धावान् हिन्दुओं ने मिल कर पवित्र काशीधाम में लोकपावनी गङ्गा जी के तट पर एक ऐसा विश्वविद्यालय स्थापित किया है जो हिन्दुओं का मान बढ़ाने वाला है। इस विश्वविद्यालय में चारो वेद और वेदाङ्ग, व्याकरण, ज्योतिष, धर्मशास्त्र, इतिहास, पुराण, मीमांसा, न्याय, सांख्य योग, वेदान्त और मनुष्यों को सुख देने वाला आयुर्वेद तथा गान्धर्व वेद तथा नूतन धनुर्वेद बन्दूक चलाना आदि पढ़ाया और सिखाया जाता है। इसमें पश्चिम के देशों की अनेक विद्या तथा लोकयात्रा में उपकारी अनेक कला अर्थात् इञ्जिनिअरिङ्ग और व्यापारिक रसायन तथा अनेक प्रकार के विज्ञान बहुत अच्छी रीति से प्रेम से पढ़ाये जाते हैं। विद्यार्थियों को सहायता के लिए बहुत सी छात्रवृत्तियां दी जाती हैं। सब प्रान्त से आये हुए विद्यार्थी यहां छात्रावास में रह कर पढ़ते हैं जैसे प्राचीन समय गुरुकुल में विद्यार्थी रहते थे।

यहां विद्यार्थियोंको शारीरिक बल की वृद्धि के लिये व्यायाम करना आवश्यक रक्खा गया है और व्याख्यानों और कथाओं से धर्म का उपदेश दिया जाता है। जिन सज्जनों को और देवियों को हिन्दू नाम का अभिमान हो उनको उचित है कि प्रेम से दान से और प्रिय वचनों से इसकी सहायता करें। जो सज्जन विश्वविद्यालय को सहायता देना चाहें वे "मंत्री विश्वविद्यालय काशी" के नाम अपना दान भेजें।

श्री विश्वनाथो जयतु ॥

मदनमोहन मालवीयः ।

# हिन्दू धर्मोपदेशः ।

## संघे शक्तिः कलौ युगे ।

हिताय सर्वलोकानां निग्रहाय च दुष्कृताम् ।
धर्म संस्थापनार्थाय प्रणम्य परमेश्वरम् ॥
ग्रामे ग्रामे सभा कार्या ग्रामे ग्रामे कथा शुभा ।
पाठशाला मल्लशाला प्रतिपर्व महोत्सवः ॥
अनाथाः विधवाः रक्ष्याः मन्दिराणि तथा च गौः ।
धर्म्यं सङ्घटनं कृत्वा देयं दान च तद्धितम् ॥
स्त्रीणां समादरः कार्यो दुःखितेषु दया तथा ।
अहिंसका न हन्तव्या आततायी वधार्हणः ॥
अभयं सत्य मस्तेयं ब्रह्मचर्य धृतिः क्षमा ।
सेव्याः सदाऽमृतमिव स्त्रीभिश्च पुरुषै स्तथा ॥
कर्म्मणां फल मस्तीति विस्मर्तव्य न जातु चित् ।
भवेत्पुनः पुनर्जन्म मोक्षस्तदनुसारतः ॥
स्मर्तव्यः सततं विष्णुः सर्वभूतेष्ववस्थितः ।
एक एवाऽद्वितीयो यः शोकपापहरः शिवः ॥
'पवित्राणां पवित्रं यो मंगलानां च मंगलम् ।
दैवतं देवतानां च लोकानां योऽव्ययः पिता' ॥
सनातनीयाः सामाजाः सिक्खाः जैनाश्च सौगताः
स्वे स्वे कर्मण्यभिरताः भावयेयुः परस्परम् ॥
विश्वासे दृढता स्वीये परनिन्दा विवर्जनम् ।
तितिक्षा मतभेदेषु प्राणिमात्रेषु मित्रता ॥
'श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परस्य कुर्वीत जानन्नप्रिय मात्मनः' ॥
न कदाचि द्विभेत्वन्याद्य कंचन विभीषयेत् ।
आर्य वृत्ति समालंब्य जीवेत्सज्जन जीवनम् ॥
सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु माकश्चिद् दुःखमाग्भवेत् ॥

के घर में आग लगाते हों। यदि ऐसे लोगों को मारे विना अपना या दूसरों का प्राण या धन या धर्म न बच सके तो उनको मारना धर्म है ॥

स्त्रियों को भी, पुरुषों को भी, निडरपन, सचाई, चोरी न करना ब्रह्मचर्य, धीरज और क्षमा का अमृत के समान सदा सेवन करना चाहिये ॥

इस बात को कभी न भूलना चाहिये कि भले कर्मों का फल भला और बुरे कर्मों का फल बुरा होता है, और कर्मों के अनुसार ही प्राणी को बार बार जन्म लेना पड़ता है या मोक्ष मिलता है ॥

घट घट में बसने वाले भगवान् विष्णु का-सर्वव्यापी ईश्वर का सुमिरन सदा करना चाहिये, जिनके समान दूसरा कोई नहीं-जो कि एक ही अद्वितीय हैं, और जो दुःख और पाप के हरने वाले शिव स्वरूप हैं। जो सब पवित्र वस्तुओं से अधिक पवित्र, जो सब मंगल कार्मों के मंगल स्वरूप हैं, जो सब देवताओं के देवता हैं और जो समस्त संसार के आदि सनातन अज अविनाशी पिता हैं ॥

सनातनधर्मी, आर्यसमाजी, ब्रह्मसमाजी, सिक्ख, जैन और बौद्ध आदि सब हिन्दुओं को चाहिए कि अपने अपने विशेष धर्म का पालन करते हुए एक दूसरे के साथ प्रेम और आदर से वर्ते ॥

अपने विश्वासमें दृढ़ता, दूसरे की निन्दा का त्याग, मतभेद में ( चाहे वह धर्म सम्बन्धी हो या लोक सम्बन्धी ) सहनशीलता, और प्राणीमात्र से मित्रता रखनी चाहिये ॥

सुनो धर्म के सर्वस्व को और सुनकर इसके अनुसार आचरण करो। जो काम अपने को बुरा या दुखदायी जान पड़े उसको दूसरे के साथ नहीं करना ॥

मनुष्य को चाहिये कि जिस काम को वह नहीं चाहता है कि कोई दूसरा उसके साथ करे, उस काम को वह भी किसी दूसरे के प्रति न करे। क्योंकि वह जानता है कि यदि उसके साथ कोई ऐसी बात करता है जो उसको प्रिय नहीं है, तो कैसी पीड़ा पहुँचती है।

चाहिये कि न कोई किसी से डरे, न किसी को डर पहुँचावे। श्रीमद्भगवद्गीता के उपदेश के अनुसार आर्य अर्थात् श्रेष्ठ पुरुषों की वृत्ति में दृढ़ रहते हुए वैसा जीवन जीये जैसा सज्जन को जीना चाहिये।

हर एक को उचित है कि यह चाहे कि सब लोग सुखी रहें, सब नीरोग रहें, सबका भला हो। कोई दुःख न पावे। प्राणियों के दुःख को दूर करने में तत्पर यह दया बलवानों की शोभा है। धर्म के अनुसार चलने वालोंको कभी इसका त्याग नहीं करना चाहिये।

यह भारतवर्ष जो हिन्दुस्तान नाम से प्रसिद्ध है—बड़ा पवित्र देश है। धन धर्म और सुख का देने वाला यह देश सब देशों से उत्तम है।

'कहते हैं कि देवता लोग यह गीत गाते हैं कि वे लोग धन्य हैं जिनका जन्म इस भारत भूमि में होता है, जिसमें जन्म लेकर मनुष्य स्वर्ग का सुख और मोक्ष दोनों को पा सकता है' ॥

यह हमारी मातृ-भूमि है, यह हमारी पितृ-भूमि है। जो लोग सुजन्मा हैं—जिनके जीवन बहुत अच्छे हुये हैं, राम, कृष्ण, बुद्ध आदि महापुरुषों के, महात्माओं के, आचार्यों के, ब्रह्मर्षियों और राजर्षियों के, गुरुवों के, धर्मवीरों के, शूरवीरोंके, दानवीरों के, स्वतंत्रता के प्रेमी देश भक्तों के उज्ज्वल कामों की यह कर्म-भूमि है। इस देशमें हम को परम भक्ति करनी चाहिये और प्राणों से और धन से भी इसकी सेवा करनी चाहिये।

जिस धर्म में परमात्मा ने गुण और कर्म के विभाग से ब्राह्मण क्षत्री वैश्य शूद्र ये चार वर्ण उपजाये और जिसमें धर्म, अर्थ, काम और मोक्ष इन चारों पुरुषार्थों के साधन में सहायक मनुष्य का जीवन पवित्र बनाने वाले ब्रह्मचर्य, गृहस्थ, वानप्रस्थ और संन्यास ये चार आश्रम स्थापित हैं।

सब धर्मों से उत्तम इसी धर्म को हिन्दु धर्म कहते हैं। जो लोग सारे संसार का उपकार चाहते हैं उनको उचित है कि इस धर्म की रक्षा और इसका प्रचार करें।

---

प्रीयतां पुरुषोत्तमः ॥

---

# काशी हिन्दू विश्वविद्यालयः।

प्रसादाद्विश्वनाथस्य काश्यां भागीरथीतटे।
विश्वविद्यालय श्रेष्ठो हिन्दूनां मानवर्धनः॥

हिन्दूराज्याधिपतिभिर्धनिकैर्धार्मिकैस्तथा।
मिलित्वा स्थापितः सद्भिर्विद्याधर्मविवृद्धये॥

यत्र वेदाः सवेदांगाः धर्मशास्त्रं च पावनम्।
इतिहासः पुराणश्च मीमांसा न्याय विस्तरः॥

सांख्ययोगो च वेदान्त आयुर्वेदः सुखावहः।
गांधर्ववेदो मधुरो धनुर्वेदश्च नूतनः॥

आङ्लं दण्डविधानञ्च दायभागादि संयुतम्।
पाश्चात्या विविधा विद्यास्तथा लोकहिताः फलाः॥

पाठ्यन्ते विधिवत्प्रेम्णा विज्ञानानि बहूनि च।
साहाय्यार्थं च छात्राणां दीयन्ते वृत्तयस्तथा॥

सर्वप्रान्तसमायाताश्छात्राः विद्याभिलाषिणः।
वसन्ति सुखिनो यत्र पुरा गुरुकुले यथा॥

नित्यं निषेव्यते यत्र व्यायामः शक्तिवर्धनः।
व्याख्यानैश्च कथाभिश्च धर्मो यत्रोपदिश्यते॥

पोष्यः संवर्धनीयश्च हिन्दूनामाभिमानिभिः।
स्त्रीभिश्च पुरुषैस्सर्वैः प्रेम्णा दानेन शक्तिभिः॥

## छात्रवृत्तिदानमाहात्म्यम् ।

गारुडे—छात्राणां भोजनाभ्यङ्गं वस्त्रं भिक्षामथापि वा ।
दत्वा प्राप्नोति पुरुषः सर्वकामान्न संशयः ॥
विवेकी जीवितं दीर्घं धर्मकामार्थमाप्नुयात् ।
सर्वमेव भवेद्दत्तं छात्राणां भोजने कृते ॥
वह्निपुराणे-यां वृत्तिं पठमानानां करोत्यनुदिनं नृप ।
स यज्ञफलमाद्त्ते दानाच्छादनभोजनैः ॥
भारते—कुक्षौ तिष्ठति यस्यान्नं विद्याभ्यासेन जीर्यति ।
गोत्राणि तारयेत्तस्य दश पूर्वान् दशापरान् ॥

विद्यागुरु विश्वनाथ जी के असीम अनुग्रह से हिन्दू राज्यों के अधिपतियों ने तथा अन्य धार्मिक धनवान् श्रद्धावान् हिन्दुओं ने मिल कर पवित्र काशीधाम में लोकपावनी गङ्गा जी के तट पर एक ऐसा विश्वविद्यालय स्थापित किया है जो हिन्दुओं का मान बढ़ाने वाला है। इस विश्वविद्यालय में चारो वेद और वेदाङ्ग, व्याकरण, ज्योतिष, धर्मशास्त्र, इतिहास, पुराण, मीमांसा, न्याय, सांख्य-योग, वेदान्त और मनुष्यों को सुख देने वाला आयुर्वेद तथा गान्धर्व वेद तथा नूतन धनुर्वेद बन्दूक चलाना आदि पढ़ाया और सिखाया जाता है। इसमें पश्चिम के देशों की अनेक विद्या तथा लोकयात्रा में उपकारी अनेक कला अर्थात् इञ्जिनिअरिङ्ग और व्यापारिक रसायन तथा अनेक प्रकार के विज्ञान बहुत अच्छी रीति से प्रेम से पढ़ाये जाते हैं। विद्यार्थियों को सहायता के लिए बहुत सी छात्रवृत्तियां दी जाती हैं। सब प्रान्त से आये हुए विद्यार्थी यहां छात्रावास में रह कर पढ़ते हैं जैसे प्राचीन समय गुरुकुल में विद्यार्थी रहते थे।

यहां विद्यार्थियोंको शारीरिक बल की वृद्धि के लिये व्यायाम करना आवश्यक रक्खा गया है और व्याख्यानों और कथाओं से धर्म का उपदेश दिया जाता है। जिन सज्जनों को और देवियों को हिन्दू नाम का अभिमान हो उनको उचित है कि प्रेमसे दान से और प्रिय वचनों से इसकी सहायता करें। जो सज्जन विश्वविद्यालय को सहायता देना चाहें वे "**मंत्री विश्वविद्यालय काशी**" के नाम अपना दान भेजें।

श्री विश्वनाथो जयतु ॥

मदनमोहन मालवीयः ।

